दाखल क्र. M-2355 विषय

नाव सप्तशती (मुद्रीत)

लेखक / लिपीकार बापु हरबोट देवकेकर

पृष्ठ 90 काळ पूर्ण / अपूर्ण

अथ देवीसूक्त ॥ श्रीगणेशाय नमः ॥ हरिः ॐ

[illegible] ॥ अहंरुद्रेभिर्वसुभिश्चराम्यहमा
दित्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाबिभर्म्यहमिंद्राग्नी
अहमश्विनोभा ॥ अहंसोममाहनसंबिभर्म्यहं त्वष्टारमुत
पूषणंभगं ॥ अहंदधामिद्रविणंहविष्मतेसुप्राव्येयज
मानायसुन्वते ॥ अहंराष्ट्रीसंगमनीवसूनांचिकितुषी
प्रथमायज्ञियानां ॥ तंमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर

 यविशेयंतीं ॥मयासो अन्नंमत्तियोविपश्यतियः प्राणितियईंशृ 
णोत्युक्तं ॥अमंतवोमांतउपक्षियंतिः श्रुधिश्रुतश्रद्धिवंते
वदामि ॥ अहमेवस्वयमिदंवदामि ॥जुष्टंदेवेभिरुतमानुषेभिः
॥यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंसुमेधां॥५॥ तं
अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाऊ ॥अहंज
नायसमदंकृणोम्यहंद्यावापृथिवीआविवेश॥ ॥अहंसु
वेपितरमस्यमूर्धन्ममयोनिरप्स्वंतःसमुद्रे॥ततोवितिष्ठे
भुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि॥अहमेववा

श्रीगणेशायनमः॥ ॥अथसप्तशतीप्रारभ्यते॥
एतेषांश्रीदेव्याःकवचार्गलाकीलकानाम्॥हरिहर
ब्रह्माणऋषयः॥अनुष्टुप्छंदः॥श्रीत्रिगुणात्मिका
चंडिकादेवता॥ममचतुर्विधपुरुषार्थसिद्ध्येजपे
विनियोगः॥ ॥नमश्चंडिकायै॥ ॥मार्कंडेय
उवाच॥ ॥यद्गुह्यंपरमंलोकेसर्वरक्षाकरंनृणाम्
॥यन्नकस्यचिदाख्यातंतन्मेब्रूहिपितामह॥१॥
॥ब्रह्मोवाच॥ ॥अस्तिगुह्यतमंविप्रसर्वभू
तोपकारकम्॥देव्यास्तुकवचंपुण्यंतच्छृणुष्वमहा

स॰ १

मुने ॥ २ ॥ प्रथमंशैलपुत्रीचद्द्वितीयंब्रह्मचारिणी ॥
तृतीयंचंद्रघंटेतिकूष्मांडेतिचतुर्थकम् ॥ ३ ॥ पंचमं
स्कंदमातेतिषष्ठंकात्यायनीतिच ॥ सप्तमंकालरात्रि
श्चमहागौरीतिचाष्टमम् ॥ ४ ॥ नवमंसिद्धिदाप्रोक्ता
नवदुर्गाःप्रकीर्तिताः ॥ उक्तान्येतानिनामानिब्रह्मणै
वमहात्मना ॥ ५ ॥ अग्निनादह्यमानस्तुशत्रुमध्येग
तोरणे ॥ विषमेदुर्गमेचैवभयार्त्ताःशरणंगताः ॥ ६ ॥
नतेषांजायतेकिंचिदशुभंरणसंकटे ॥ नापदंतस्यप
श्यामिशोकदुःखभयंनहि ॥ ७ ॥ येस्तुभक्त्यास्मृता

क॰ १ १

नूनंतेषांसिद्धिःप्रजायते॥ प्रेतसंस्थातुचामुंडावारा
हीमहिषासना॥८॥ऐंद्रीगजसमारूढावैष्णवीगरु
डासना॥माहेश्वरीवृषारूढाकौमारीशिखिवाहना
॥९॥ब्राह्मीहंससमारूढासर्वाभरणभूषिता॥ल-
क्ष्मीःपद्मासनादेवीपद्महस्ताहरिप्रिया॥१०॥इत्ये
तामातरःसर्वाःसर्वयोगसमन्विताः॥नानाभरणशो
भाढ्यानानारत्नोपशोभिताः॥११॥दृश्यंतेरथमारू
ढादेव्यःक्रोधसमाकुलाः॥शंखंचक्रंगदांशक्तिंहलं
चमुसलायुधम्॥१२॥खेटकंतोमरंचैवपरशुंपाशमे

स. २

वच्च ॥ कुंतायुधंत्रिशूलंचशार्ङ्गमायुधमुत्तमम् ॥ १३ ॥
दैत्यानांदेहनाशायभक्तानामभयायच ॥ धारयंत्यायु
धानीत्थंदेवानांचहितायवै ॥ १४ ॥ नमस्तेऽस्तुमहारौ
द्रेमहाघोरपराक्रमे ॥ महाबलेमहोत्साहेमहाभयवि-
नाशिनि ॥ १५ ॥ त्राहिमांदेविदुःप्रेक्ष्येशत्रूणांभयव
र्द्धिनि ॥ प्राच्यांरक्षतुमामैंद्रीआग्नेय्यामग्निदेवता ॥
१६ ॥ दक्षिणेरक्षवाराहिनैर्ऋत्यांखड्गधारिणि ॥ प्रती
च्यांवारुणीरक्षेद्वायव्यांमृगवाहिनी ॥ १७ ॥ उदीच्यां
रक्षकौबेरिईशान्यांशूलधारिणि ॥ ऊर्ध्वंब्रह्माणीमेर

क. १ २

क्षेदधस्ताद्वैष्णवीतथा ॥ १८ ॥ एवंदशदिशोरक्षेच्चा
मुंडाशववाहना ॥ जयामेअग्रतःस्थातुविजयास्थातुपृ
ष्ठतः ॥ १९ ॥ अजितावामपार्श्वेचदक्षिणेचापराजिता
॥ शिखांमेद्योतिनीरक्षेदुमामूर्ध्निव्यवस्थिता ॥ २० ॥ मा
लाधरीललाटेचभ्रुवोरक्षेद्यशस्विनी ॥ त्रिनेत्रानेत्रयो
र्मध्येयमघंटाचनासिके ॥ २१ ॥ शंखिनीचक्षुषोर्मध्ये
श्रोत्रयोर्द्वारवासिनी ॥ कपालौकालिकारक्षेत्कर्णमूले
चशांकरी ॥ २२ ॥ नासिकायांसुगंधाचउत्तरोष्ठेतुचर्चि
का ॥ अधरेचामृतकलाजिह्वायांचसरस्वती ॥ २३ ॥ दं

स. ३

तान्रक्षतुकौमारीकंठमध्येचचंडिका॥ घंटिकांचित्रघं क. १
टाचमहामायाचतालुके॥ २४॥ कामाक्षीचुबुकंरक्षे-
द्वाचंमेसर्वमंगला॥ ग्रीवायांभद्रकालीचपृष्ठवंशेधनु
र्धरी॥ २५॥ नीलग्रीवाबहिःकंठेनलिकांनलकूबरी॥
खड्गधारिण्युभौस्कंधौबाहूमेवज्रधारिणी॥ २६॥ ह
स्तौतुदंडिनीरक्षेदंबिकाचांगुलीस्तथा॥ नखान्शूले
श्वरीरक्षेत्कुक्षौरक्षेन्नलेश्वरी॥ २७॥ स्तनौरक्षेन्महादे
वीमनःशोकविनाशिनी॥ हृदयेललितादेवीउदरेशूल ३
धारिणी॥ २८॥ नाभिंचकामिनीरक्षेद्गुह्यंगुह्येश्वरीत

था ॥ ऊर्वोर्भगवनीरक्षेज्जानुनी विंध्यवासिनी ॥२९॥ जं
घेमहाबला प्रोक्ता सर्वकामप्रदायिनी ॥ गुल्फयोर्नारसिं
ही च पादपृष्ठेमितौजसी ॥ ३० ॥ पादांगुलीः श्रीधरी च
पादाधस्तलवासिनी ॥ दंष्ट्रा: करालिनीरक्षेत्केशांश्चै
वोर्ध्वकेशिनी ॥ ३१ ॥ रोमकूपाणि कौबेरी त्वचं वागीश्व
री तथा ॥ रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती
॥ ३२ ॥ अंत्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ॥ पद्मा
वती पद्मकोशे कफे चूडामणी तथा ॥ ३३ ॥ ज्वालामुखी
नरवज्वाला अभेद्या सर्वसंधिषु ॥ शुक्रं ब्रह्माणी मे रक्षे

स. ४

च्छायांछत्रेश्वरीतथा ॥ ३४ ॥ अहंकारंमनोबुद्धिंरक्षमे
सर्वधारिणि ॥ प्राणापानौतथाव्यानमुदानंचसमानक
म् ॥ ३५ ॥ वज्रहस्ताचमेरक्षेत्प्राणंकल्याणशोभना ॥
रसेरूपेचगंधेचशब्देस्पर्शेचयोगिनी ॥ ३६ ॥ सत्वंरज
स्तमश्चैवरक्षेन्नारायणीसदा ॥ आयुर्मेरक्षवाराहिधर्मं
रक्षतुभैरवी ॥ ३७ ॥ यशःकीर्त्तिंचलक्ष्मींचसदारक्षंतु
मातरः ॥ गोत्रमिंद्राणीमेरक्षेत्पशून्मेरक्षचंडिके ॥ ३८
॥ पुत्रान्रक्षेन्महालक्ष्मीर्भार्यांरक्षतुभैरवी ॥ धनेश्वरीध
नंरक्षेत्कौमारीकन्यकास्तथा ॥ ३९ ॥ मार्गंक्षेमकरीरक्षे

क. १ ४

द्विजयासर्वतःस्थिता ॥ राजद्वारेमहालक्ष्मीःसंग्रामेज
यवर्द्धिनी ॥ ४० ॥ सर्वरक्षाकरंपुण्यंकवचंसर्वदाजपेत्
॥ इदंरहस्यंविप्रर्षेभक्त्यातवमयोदितम् ॥ ४१ ॥ रक्षा
हीनंतुयत्स्थानंवर्जितंकवचेनतु ॥ तत्सर्वंरक्षमेदेविज
यंतीपापनाशिनी ॥ ४२ ॥ पदमेकंनगच्छेत्तुयदीच्छे
च्छुभमात्मनः ॥ कवचेनावृतोनित्यंयत्रयत्रहिगच्छति
॥ ४३ ॥ तत्रतत्रार्थलाभश्चविजयःसार्वकामिकः ॥ यंयं
चिंतयतेकामंतंतंप्राप्नोतिनिश्चितम् ॥ ४४ ॥ परमैश्व
र्यमतुलंप्राप्स्यतेभूतलेपुमान् ॥ निर्भयोजायतेमर्त्यः

स. ५

संग्रामेषपराजितः ॥ ४५ ॥ त्रैलोक्येतु भवेत्पूज्यः कव
चेनावृतः पुमान् ॥ इदंतुदेव्याः कवचंदेवानामपिदुर्ल
भम् ॥ ४६ ॥ यः पठेत्प्रयतोनित्यंत्रिसंध्यंश्रद्धयान्वितः
॥ दैवीकलाभवेत्तस्यत्रैलोक्येष्वपराजितः ॥ ४७ ॥ जी
वेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ नश्यंतिव्याधयःस
र्वेलूताविस्फोटकादयः ॥ ४८ ॥ स्थावरंजंगमंवाऽपिकृ
त्रिमंचापियद्विषम् ॥ अभिचाराणिसर्वाणिमंत्रयंत्रा
णिभूतले ॥ ४९ ॥ भूचराः खेचराश्चैवजलजाश्चोपदे-
शिकाः ॥ सहजाः कुलजामालाडाकिनीशाकिनीतथा

क. १ ५

॥५०॥ अंतरिक्षचराघोराडाकिन्यश्चमहाबलाः॥ ग्रह
भूतपिशाचाश्चयक्षगंधर्वराक्षसाः॥५१॥ ब्रह्मराक्ष
सवेतालाः कूष्मांडाभैरवादयः॥ नश्यंतिदर्शनात्तस्यक
वचेहृदिसंस्थिते॥५२॥ मानोन्नतिर्भवेद्राज्ञस्तेजोवृ
द्धिकरंपरम्॥ यशसावर्द्धतेसोऽपिकीर्तिमंडितभूत
ले॥५३॥ जपेत्सप्तशतींचंडींकृत्वातुकवचंपुरा॥ याव
द्भूमंडलंधत्तेसशैलवनकाननम्॥५४॥ तावत्तिष्ठति
मेदिन्यांसंततिःपुत्रपौत्रिकी॥ देहांतेपरमंस्थानंयत्सु
रैरपिदुर्लभम्॥५५॥ प्राप्नोतिपुरुषोनित्यंमहामाया

स. ६ प्रसादतः॥ तत्पदं समवाप्नोति यावदाभूतसंप्लवम्॥ क. १
५६॥ ॥ इति हरिहरब्रह्मविरचितं देव्याः कवचं
संपूर्णम्॥ ॥ श्रीरस्तु॥ ॥ शुभं भवतु॥ ॥
॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥



स. ७

मार्कंडेयउवाच॥ ॥जयंतीमंगलाकालीभद्रका- अ. २
लीकपालिनी॥दुर्गाक्षमाशिवाधात्रीस्वाहास्वधान
मोस्तुते॥१॥मधुकैटभविद्राविविधातृवरदेनमः॥
रूपंदेहिजयंदेहियशोदेहिद्विषोजहि॥२॥महिषासु
रनिर्नाशिविधातृवरदेनमः॥रूपं०॥३॥रक्तबीजव
धेदेविचंडमुंडविमर्दिनि॥रूपं०॥४॥निशुंभशुंभनि
र्नाशितथाधूम्राक्षमर्दिनि॥रूपं०॥५॥वंदितांघ्रियुगे
देवैर्देविसौभाग्यदायिनि॥रूपं०॥६॥अचिंत्यरू ७
पचरितेसर्वशत्रुविनाशिनि॥रूपं०॥७॥नतेभ्यःस

र्वदा भक्त्या चंडिके दुरितापहे ॥ रूपं० ॥ ८ ॥ स्तुवन्द्यो
भक्तिपूर्वत्वांचडिके व्याधिनाशिनि ॥ रूपं० ॥ ९ ॥ चंडि
केसततंयेत्वामर्चयंतीहभक्तितः ॥ रूपं० ॥ १० ॥ देहि
सौभाग्यमारोग्यंदेहिदेविपरंसुखम् ॥ रूपं० ॥ ११ ॥ वि
धेहिदेविकल्याणंविधेहिविपुलांश्रियम् ॥ रूपं० ॥ १२ ॥
विधेहिद्विषतांनाशंविधेहिबलमुच्चकैः ॥ रूपं० ॥ १३ ॥
सुरासुरशिरोरत्ननिघृष्टचरणेंबिके ॥ रूपं० ॥ १४ ॥ -
विद्यावंतंयशस्वंतंलक्ष्मीवतंजनंकुरु ॥ रूपं० ॥ १५ ॥
प्रचंडदैत्यदर्पघ्नेचंडिकेप्रणतायमे ॥ रूपं० ॥ १६ ॥ चतु

स. ८

र्भुजेचतुर्वक्त्रसंस्तुतेपरमेश्वरि॥ रूपं०॥ १७॥ कृष्णेन
संस्तुतेदेविशश्वद्भक्त्यासदांबिके॥ रूपं०॥ १८॥ हिमा
चलसुतानाथसंस्तुतेपरमेश्वरि॥ रूपं०॥ १९॥ इंद्राणी
पतिसद्भावपूजितेपरमेश्वरि॥ रूपं०॥ २०॥ देविप्रचंड
दोर्दंडदैत्यदर्पविनाशिनि॥ रूपं०॥ २१॥ देविभक्तजनो
द्दामदत्तानंदोदयेंबिके॥ रूपं०॥ २२॥ पुत्रान्देहिधनंदे
हिसर्वान्कामांश्चदेहिमे॥ रूपं०॥ २३॥ पत्नींमनोरमांदे
हिमनोवृत्तानुसारिणीम्॥ तारिणींदुर्गसंसारसागर
स्यकुलोद्भवाम्॥ २४॥ इदंस्तोत्रंपठित्वातुमहास्तोत्रंप

अ. २

८

ठेन्नरः ॥ सतुसप्तशतीसंख्यावरमाप्नोतिसंपदः ॥ २५

॥ ॥ इतिविष्णुविरचितार्गलास्तुतिः समाप्ता ॥

॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



मार्कंडेयउवाच ॥ ॥ विशुद्धज्ञानदेहायत्रिवेदीदि
व्यचक्षुषे ॥ श्रेयःप्राप्तिनिमित्तायनमःसोमार्धधारि
णे ॥ १ ॥ सर्वमेतद्विजानीयन्मंत्राणामभिकीलकम् ॥ सो
पिक्षेममवाप्नोतिसततंजाप्यतत्परः ॥ २ ॥ सिद्ध्यंत्युच्चा
टनादीनिवस्तूनिसकलान्यपि ॥ एतेनस्तुवतांदेवींस्तो
त्रमंत्रेणसिद्ध्यति ॥ ३ ॥ नमंत्रोनौषधंतत्रनकिंचिदपि
वर्त्तते ॥ विनाजाप्येनसिद्ध्येतसर्वमुच्चाटनादिकम् ॥ ४
॥ समस्तान्यपिसिद्ध्यंतिलोकशंकामिमांहरः ॥ कृत्वा
निमंत्रयामाससर्वमेवमिदंशुभम् ॥ ५ ॥ स्तोत्रंवैचंडि-

कायास्तुतच्चगुप्तंचकारसः॥ समाप्तिर्नचपुण्येनतांय
थावन्नियंत्रणाम्॥६॥ सोपिक्षेममवाप्नोतिसर्वमेवन-
संशयः॥ कृष्णायांचचतुर्दश्यामष्टम्यांवासमाहितः॥
७॥ ददातिप्रतिगृह्णातिनान्यथैषाप्रसीदति॥ इत्थंरू
पेणकीलेनमहादेवेनकीलितम्॥८॥ योनिःकीलांवि-
धायैनांनित्यंजपतिसंस्फुटम्॥ससिद्धःसगणःसोपिगं
धर्वोजायतेवने॥९॥ नचैवाप्यटतस्तस्यभयंक्वापीहजा
यते॥ नापमृत्युवशंयातिमृतोमोक्षमवाप्नुयात्॥१०॥
ज्ञात्वाप्रारभ्यकुर्वीतह्यकुर्वाणोविनश्यति॥ ततोज्ञात्वैव

संपन्नमिदंप्रारभ्यतेबुधैः ॥ ११ ॥ सौभाग्यादिचयत्किं-
चित्दृश्यतेललनाजने ॥ तत्सर्वंतत्प्रसादेनतेनजाप्यमि
दंशुभम् ॥ १२ ॥ शनैस्तुजप्यमानेस्मिंस्तोत्रेसंपत्तिरुच्च
कैः ॥ भवत्येवसमग्रापितनःप्रारभ्यमेवतत् ॥ १३ ॥ ऐश्व
र्यंयत्प्रसादेनसौभाग्यारोग्यसंपदः ॥ शत्रुहानिःपरोमो
क्षःस्तूयतेसानकिंजनैः ॥ १४ ॥ ॥ इतिईश्वरविर
चितंदेव्याःकीलकंसमाप्तम् ॥ ॥ श्रीरस्तु ॥ ॥
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अस्यश्रीनवार्णमंत्रस्य ॥ ब्रह्माविष्णुमहेश्वराऋषयः ॥
गायत्र्युष्णिगनुष्टुप्छंदांसि ॥ श्रीमहाकालीमहालक्ष्मी
महासरस्वत्योदेवताः ॥ ऐंबीजम् ॥ ह्रींशक्तिः ॥ क्लींकी
लकम् ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीप्रीत्यर्थे
जपेविनियोगः ॥ ब्रह्माविष्णुमहेश्वरऋषिभ्योनमःशि
रसि ॥ गायत्र्युष्णिगनुष्टुप्छंदोभ्योनमःमुखे ॥ श्रीमहा
कालीमहालक्ष्मीमहासरस्वतीदेवताभ्योनमःहृदये ॥
ऐंबीजायनमःगुह्ये ॥ ह्रींशक्तयेनमःपादयोः ॥ क्लींकी
लकायनमःनाभौ ॥ मूलेनकरौसंशोध्य ॥ ऐंअंगुष्ठाभ्यां

स. नमः॥ ह्रींतर्जनीभ्यांनमः॥ क्लींमध्यमाभ्यांनमः॥ चामुं न्या.
१२ डायैअनामिकाभ्यांनमः॥ विच्चेकनिष्ठिकाभ्यांनमः॥ ऐं
ह्रींक्लींचामुंडायैविच्चेकरतलकरपृष्ठाभ्यांनमः॥ एवंहृद
यादि॥ ऐंनमःशिखायाम्॥ ह्रींनमःदक्षिणनेत्रे॥ क्लींन
मःवामनेत्रे॥ चांनमःदक्षिणकर्णे॥ मुंनमःवामकर्णे॥
डांनमःदक्षिणनासापुटे॥ यैंनमःवामनासापुटे॥ विंनमः
मुखे॥ च्चेंनमःगुह्ये॥ मूलेनाष्टवारंव्यापकंकुर्यात्॥ ऐंप्रा
च्यैनमः॥ ह्रींआग्नेय्यैनमः॥ क्लींदक्षिणायैनमः॥ चांनै १२
र्ऋत्यैनमः॥ मुंप्रतीच्यैनमः॥ डांवायव्यैनमः॥ यैंउदीच्यै

नमः॥ विच्चे ईशान्यै नमः॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे ऊर्ध्वा
यै नमः॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे भूम्यै नमः॥ ॥अथ
ध्यानम्॥ ॥खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुंडीं
शिरः शंखं संदधतीं करैस्त्रिनयनां सर्वांगभूषाभृताम्॥
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां याम
स्तौत्स्वपिते हरौ कमलजो हंतुं मधुं कैटभम्॥ १॥ अक्षस्र
क्परशुं गदेषुकुलिशं पद्मं धनुः कुंडिकां दंडं शक्तिमसिं
च चर्म जलजं घंटां सुराभाजनम्॥ शूलं पाशसुदर्शने च
दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महाल

स. क्ष्मींसरोजस्थिताम्॥२॥ घंटाशूलहलानिशंखमुसले ध्या.
१३ चक्रंधनुःसायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतां
शुतुल्यप्रभाम्॥गौरीदेहसमुद्भवांत्रिजगतामाधारभू
तामहापूर्वमत्रसरस्वतीमनुभजेशुंभादिदैत्यार्दिनीम्
॥३॥ एवंध्यात्वामानसोपचारैःसंपूज्यमालांप्रार्थयेत्
॥ मांमालेमहामायेसर्वशक्तिस्वरूपिणि॥ चतुर्वर्गस्त्व
यिन्यस्तस्तस्मान्मेसिद्धिदाभव॥अविघ्नंकुरुमालेत्वम्
जपंकुर्यात्॥जपांतेमालांशिरसिनिधायप्रार्थ्यत्हृदया १३
दिषडंगंन्यासंकुर्यात्॥रात्रिसूक्तंपठित्वासप्तशतीन्या

सान्कुर्यात् ॥ एतेषांश्री प्रथममध्यमोत्तमचरित्राणाम्
ब्रह्माविष्णुमहेश्वराऋषयः॥ श्रीमहाकालीमहालक्ष्मी
महासरस्वत्योदेवताः॥ गायत्र्युष्णिगनुष्टुप्छंदांसि ॥
नंदाशाकंभरीभीमाःशक्तयः॥ रक्तदंतिकादुर्गाभ्राम-
र्योबीजानि॥ अग्निर्वायुःसूर्यस्तत्वानि॥ ऋग्यजुःसाम
वेदाध्यानानि॥ सकलकामनासिध्दयेश्रीदेवतात्रयप्री
त्यर्थेचरित्रत्रयजपेविनियोगः॥ खड्गिनीशूलिनीघोरा
गदिनीचक्रिणीतथा॥ शंखिनीचापिनीबाणभुशुंडीप
रिघायुधा॥ अंगुष्ठाभ्यांनमः॥ शूलेनपाहिनोदेविपाहि

स. १४

खड्गेनचांबिके ॥ घंटास्वनेननः पाहिचापज्यानिःस्वनेन
च ॥ तर्जनीभ्यानमः ॥ प्राच्यांरक्षप्रतीच्यांचचंडिकेरक्ष
दक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्वरि ॥ मध्य
माभ्यांनमः ॥ सौम्यानियानिरूपाणित्रैलोक्येविचरंति
ते ॥ यानिचात्यंतघोराणितैरक्षास्मांस्तथाभुवम् ॥ अ-
नामिकाभ्यांनमः ॥ खड्गशूलगदादीनियानिचास्त्राणि
तेंबिके ॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः ॥ कनिष्ठि
काभ्यांनमः ॥ सर्वस्वरूपेसर्वेशेसर्वशक्तिसमन्विते ॥ भ
येभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तुते ॥ करतलकरपृष्ठा

न्या. १४

भ्यांनमः॥ एवंहृदयादिन्यासः॥ ॥अथध्यानम्॥
॥ विद्युद्दामसमप्रभांमृगपतिस्कंधस्थितांभीषणांक-
न्याभिःकरवालखेटविलसद्धस्ताभिरासेविताम्॥हस्तै
श्चक्रधरालिखेटविशिखांश्चापंगुणंतर्जनींबिभ्राणाम
नलात्मिकांशशिधरांदुर्गांत्रिनेत्रांभजे॥१॥ ॥अस्य
श्रीप्रथमचरित्रस्य॥ब्रह्माऋषिः॥श्रीमहाकालीदेवता
॥गायत्रीछंदः॥नंदाशक्तिः॥रक्तदंतिकाबीजम्॥अ
ग्निस्तत्वम्॥ऋग्वेदध्यानम्॥श्रीमहाकालीप्रीत्यर्थंज
पेविनियोगः॥ नमश्चंडिकायै॥ ॥मार्कंडेयउवाच॥१

स.

१५

॥सावर्णिःसूर्यतनयोयोमनुःकथ्यतेऽष्टमः॥निशामय
तदुत्पत्तिंविस्तराद्गदतोमम॥२॥महामायानुभावेनय
थामन्वंतराधिपः॥सबभूवमहाभागःसावर्णिस्तनयो
रवेः॥३॥स्वारोचिषेंतरेपूर्वंचैत्रवंशसमुद्भवः॥सुरथो
नामराजाभूत्समस्तेक्षितिमंडले॥४॥तस्यपालयतःस
म्यक्प्रजाःपुत्रानिवौरसान्॥बभूवुःशत्रवोभूपाःको-
लाविध्वंसिनस्तदा॥५॥तस्यतैरभवद्युद्धमतिप्रबलदं
डिनः॥न्यूनैरपिसतैर्युद्धेकोलाविध्वंसिभिर्जितः॥६॥
ततःस्वपुरमायातोनिजदेशाधिपोभवत्॥आक्रांतः

अ. १

१५

समहाभागस्तैस्तदाप्रबलारिभिः ॥ ७ ॥ अमात्यैर्बलिभि
र्दुष्टैर्दुर्बलस्यदुरात्मभिः ॥ कोशोबलंचापहृतंतत्रापिस्वपु
रेततः ॥ ८ ॥ ततोमृगयाव्याजेनहृतःस्वाम्यःसभूपतिः ॥
एकाकीहयमारुह्यजगामगहनंवनम् ॥ ९ ॥ सतत्राश्रम
मद्राक्षीद्द्विजवर्यस्यमेधसः ॥ प्रशांतश्वापदाकीर्णंमुनिशि
ष्योपशोभितम् ॥ १० ॥ तस्थौकंचित्सकालंचमुनिनाते
नसत्कृतः ॥ इतश्चेतश्चविचरंस्तस्मिन्मुनिवराश्रमे ॥
११ ॥ सोचिंतयत्तदातत्रममत्वाकृष्टमानसः ॥ मत्पूर्वैः
पालितंपूर्वंमयाहीनंपुरंहितत् ॥ १२ ॥ मद्भृत्यैस्तैरसद्वृत्तैर्धर्मं

स. १६ अ. १

तः पाल्यते न वा ॥ न जाने स प्रधानो मे शूरहस्ती सदा मदः ॥

१३॥ मम वैरिवशं यातः कान्भोगानुपलप्स्यते ॥ ये ममा

नुगता नित्यं प्रसादधनभोजनैः ॥ १४॥ अनुवृत्तिं ध्रुवं तेद्य

कुर्वंत्यन्यमहीभृताम् ॥ असम्यक्व्ययशीलैस्तैः कुर्वद्भिः

सततं व्ययम् ॥ १५॥ संचितः सोतिदुःखेन क्षयं कोशो ग

मिष्यति ॥ एतच्चान्यच्च सततं चिंतयामास पार्थिवः ॥ १६

॥ तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ॥ स पृष्टस्तेन

कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ १७॥ सशोक इव कस्मात्त्वं

दुर्मना इव लक्ष्यसे ॥ इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदि १६

तम् ॥ १८ ॥ प्रत्युवाच सतं वैश्यः प्रश्रयावनतो नृपम् ॥ १९
॥ वैश्य उवाच ॥ २० ॥ समाधिर्नाम वैश्योहमुत्पन्नो धनिनां
कुले ॥ २१ ॥ पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥ वि
हीनः स्वजनैर्दारैः पुत्रैरादाय मे धनम् ॥ २२ ॥ वनमभ्याग-
तो दुःखी निरस्तश्चाप्तबंधुभिः ॥ सोहं न वेद्मि पुत्राणां कु
शलाकुशलात्मिकाम् ॥ २३ ॥ प्रवृत्तिं स्वजनानां च दाराणां
चात्र संस्थितः ॥ किन्नु तेषां गृहे क्षेममक्षेमं किन्नु सांप्रतं ॥
२४ ॥ कथं ते किन्नु सद्वृत्ता दुर्वृत्ताः किन्नु मे सुताः ॥ २५ ॥
राजोवाच ॥ २६ ॥ यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्ध

स. नैः॥२७॥तेषुकिंभवतःस्नेहमनुबध्नातिमानसम्॥२८ अ.
१७ ॥वैश्यउवाच॥२९॥एवमेतद्यथाप्राहभवानस्मद्गतंवचः १
॥३०॥किंकरोमिनबध्नातिममनिष्ठुरतांमनः॥यैःसंत्यज्य
पितृस्नेहंधनलुब्धैर्निराकृतः॥३१॥पतिस्वजनहार्दंचहा
र्द्दितेष्वेवमेमनः॥किमेतन्नाभिजानामिजानन्नपिमहाम
ते॥३२॥यत्प्रेमप्रवणंचित्तंविगुणेष्वपिबंधुषु॥तेषांकृते
मेनिःश्वासोदौर्मनस्यंचजायते॥३३॥करोमिकिंयन्नम
नस्तेष्वप्रीतेषुनिष्ठुरम्॥३४॥ ॥मार्कंडेयउवाच॥३५॥ १७
ततस्तौसहितौविप्रतंमुनिंसमुपस्थितौ॥३६॥समाधि

र्नामवैश्योसौसचपार्थिवसत्तमः॥ कृत्वातुतौयथान्या
यंयथार्हंतेनसंविदम्॥३७॥उपविष्टौकथाःकाश्चिच्च
क्रतुर्वैश्यपार्थिवौ॥३८॥ ॥राजोवाच॥३९॥भगवं-
स्त्वामहंप्रष्टुमिच्छाम्येकंवदस्वतत्॥४०॥दुःखाययन्मे
मनसःस्वचित्तायत्ततांविना॥ममत्वंगतराज्यस्यराज्यां-
गेष्वखिलेष्वपि॥४१॥जानतोपियथाऽज्ञस्यकिमेतन्मु
निसत्तम॥अयंचनिकृतःपुत्रैर्दारैर्भृत्यैस्तथोज्झितः॥
४२॥स्वजनेनचसंत्यक्तस्तेषुहार्दीतथाप्यति॥एवमेष
तथाहंचद्वावप्यत्यंतदुःखितौ॥४३॥दृष्टदोषेपिविषयेम

स.
१८

मत्वाकृष्टमानसौ ॥ तत्किमेतन्महाभागयन्मोहोज्ञानिनो
रपि ॥ ४४ ॥ ममास्यचभवत्येषाविवेकांधस्यमूढता ॥ ४५
॥ ऋषिरुवाच ॥ ४६ ॥ ज्ञानमस्तिसमस्तस्यजंतोर्विषय
गोचरे ॥ ४७ ॥ विषयाश्चमहाभागयांतिचैवंपृथक्पृथ
क् ॥ दिवांधाःप्राणिनःकेचिद्रात्रावंधास्तथापरे ॥ ४८ ॥
केचिद्दिवातथारात्रौप्राणिनस्तुल्यदृष्टयः ॥ ज्ञानिनोम
नुजाःसत्यंकिंतुतेनहिकेवलम् ॥ ४९ ॥ यतोहिज्ञानिनः
सर्वेपशुपक्षिमृगादयः ॥ ज्ञानंचतन्मनुष्याणांयत्तेषांमृग
पक्षिणाम् ॥ ५० ॥ मनुष्याणांचयत्तेषांतुल्यमन्यत्तथोभ

अ.
१
१८

यो:॥ ज्ञानेपिसतिपश्यैतान्पतंगांश्छावचंचुषु॥५१॥क
णमोक्षादृतान्मोहात्पीड्यमानानपिक्षुधा॥मानुषामनु
जव्याघ्रसाभिलाषाःसुतान्प्रति॥५२॥लोभात्प्रत्युपका
रायनन्वेतान्किंनपश्यसि॥तथापिममतावर्त्तेमोहगर्त्तेनि
पातिताः॥५३॥महामायाप्रभावेनसंसारस्थितिकारिणा
॥तन्नात्रविस्मयःकार्योयोगनिद्राजगत्पतेः॥५४॥महा
मायाहरेश्चैषातयासंमोह्यतेजगत्॥ज्ञानिनामपिचेतां
सिदेवीभगवतीहिसा॥५५॥बलादाकृष्यमोहायमहा
मायाप्रयच्छति॥तयाविसृज्यतेविश्वंजगदेतच्चराचरम्

स. ॥५६॥सैषाप्रसन्नावरदानृणांभवतिमुक्तये॥साविद्याप अ.
१९ रमामुक्तेर्हेतुभूतासनातनी॥५७॥संसारबंधहेतुश्चसैव १
सर्वेश्वरेश्वरी॥५८॥ ॥राजोवाच॥५९॥भगवन्काहि
सादेवीमहामायेतियांभवान्॥६०॥ब्रवीतिकथमुत्पन्ना
साकर्मास्याश्चकिंद्विज॥यत्स्वभावाचसादेवीयत्स्वरूपा
यदुद्भवा॥६१॥तत्सर्वंश्रोतुमिच्छामित्वत्तोब्रह्मविदांवर
॥६२॥ ॥ऋषिरुवाच॥६३॥नित्यैवसाजगन्मूर्त्तिस्त
यासर्वमिदंततम्॥६४॥तथापितत्समुत्पत्तिर्बहुधाश्रूय १९
तांमम॥देवानांकार्यसिद्ध्यर्थमाविर्भवतिसायदा॥६५॥

उत्सन्नेतितदालोकेसानित्याप्यभिधीयते ॥ योगनि
द्रांयदाविष्णुर्जगत्येकार्णवीकृते ॥ ६६ ॥ आस्तीर्यशेष
मभजत्कल्पांतेभगवान्प्रभुः ॥ तदाद्वावसुरौघोरौवि-
ख्यातौमधुकैटभौ ॥ ६७ ॥ विष्णुकर्णमलोद्भूतौहंतुंब्र
ह्माणमुद्यतौ ॥ सनाभिकमलेविष्णोःस्थितोब्रह्माप्र
जापतिः ॥ ६८ ॥ दृष्ट्वातावसुरौचोग्रौप्रसुप्तंचजनार्द
नम् ॥ तुष्टावयोगनिद्रांतामेकाग्रहृदयस्थितः ॥ ६९ ॥
विबोधनार्थायहरेर्हरिनेत्रकृतालयाम् ॥ विश्वेश्वरींज
गद्धात्रींस्थितिसंहारकारिणीम् ॥ ७० ॥ निद्रांभगवतीं

स. विष्णोरतुलांतेजसःप्रभुः॥७१॥ ॥ब्रह्मोवाच॥७२॥ अ.
२० ॥त्वंस्वाहात्वंस्वधात्वंहिवषट्कारःस्वरात्मिका॥७३॥ १
सुधात्वमक्षरेनित्येत्रिधामात्रात्मिकास्थिता॥अर्धमा
त्रास्थितानित्यायानुच्चार्याविशेषतः॥७४॥त्वमेवसा
त्वंसावित्रीत्वंदेवीजननीपरा॥त्वयैतद्धार्यतेविश्वंत्व
यैतत्सृज्यतेजगत्॥७५॥त्वयैतत्पाल्यतेदेवित्वमत्स्यंते
चसर्वदा॥विसृष्टौसृष्टिरूपात्वंस्थितिरूपाचपाल
ने॥७६॥तथासंहृतिरूपांतेजगतोस्यजगन्मये॥म २०
हाविद्यामहामायामहामेधामहास्मृतिः॥७७॥महामो

हाचभवतीमहादेवीमहासुरी ॥ प्रकृतिस्त्वंचसर्वस्य
गुणत्रयविभाविनी ॥ ७८ ॥ कालरात्रिर्महारात्रिर्मो
हरात्रिश्चदारुणा ॥ त्वंश्रीस्त्वमीश्वरीत्वंह्रीस्त्वंबुद्धि
र्बोधलक्षणा ॥ ७९ ॥ लज्जापुष्टिस्तथातुष्टिस्त्वंशांतिः
क्षांतिरेवच ॥ खड्गिनीशूलिनीघोरागदिनीचक्रिणी
तथा ॥ ८० ॥ शंखिनीचापिनीबाणभुशुंडीपरिघायु
धा ॥ सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुंदरी ॥
८१ ॥ परापराणांपरमात्वमेवपरमेश्वरी ॥ यच्चकिंचि
त्क्वचिद्वस्तुसदसद्वाखिलात्मिके ॥ ८२ ॥ तस्यसर्वस्य

स. २१ याशक्तिःसात्वंकिंस्तूयसे तदा ॥ ययात्वयाजगत्स्र अ. १
ष्टाजगत्पातात्तियोजगत् ॥ ८३ ॥ सोपिनिद्रावशंनीतः
कस्त्वांस्तोतुमिहेश्वरः ॥ विष्णुःशरीरग्रहणमहमीशा
नएवच ॥ ८४ ॥ कारितास्तेयतोतस्त्वांकःस्तोतुंशक्ति
मान्भवेत् ॥ सात्वमित्थंप्रभावैःस्वैरुदारैर्देविसंस्तु
ता ॥ ८५ ॥ मोहयैतौदुराधर्षावसुरौमधुकैटभौ ॥ प्र
बोधंचजगत्स्वामीनीयतामच्युतोलघु ॥ ८६ ॥ बोधश्च
क्रियतामस्यहंतुमेतौमहासुरौ ॥ ८७ ॥ ॥ ऋषिरुवा २१
च ॥ ८८ ॥ एवंस्तुतातदादेवीतामसीतत्रवेधसा ॥ ८९

विष्णोः प्रबोधनार्थायनिहंतुंमधुकैटभौ ॥ नेत्रास्य
नासिकाबाहुहृदयेभ्यस्तथोरसः ॥ ९० ॥ निर्गम्यदर्श
नेतस्थौब्रह्मणोव्यक्तजन्मनः ॥ उत्तस्थौचजगन्नाथ
स्तयामुक्तोजनार्दनः ॥ ९१ ॥ एकार्णवेहिशयनात्ततः
सदद्दशेचतौ ॥ मधुकैटभौदुरात्मानावतिवीर्यपराक्र
मौ ॥ ९२ ॥ क्रोधरक्तेक्षणावत्तुंब्रह्माणंजनितोद्यमौ ॥
समुत्थायततस्ताभ्यांयुयुधेभगवान्हरिः ॥ ९३ ॥ पंच
वर्षसहस्राणिबाहुप्रहरणोविभुः ॥ तावप्यतिबलोन्म
त्तौमहामायाविमोहितौ ॥ ९४ ॥ उक्तवंतौवरोस्मत्तोव्री

स. यताभिनिकेशवम् ॥९५॥ ॥श्रीभगवानुवाच॥९६॥ अ.
२२ भवेतामद्यमेतुष्टौममवध्यावुभावपि॥९७॥किमन्येन १
वरेणात्रएतावद्धिवृतंमया॥९८॥ ॥ऋषिरुवाच॥
९९॥वंचिताभ्यामितितदासर्वमापोमयंजगत् ॥१००॥
विलोक्यताभ्यांगदितोभगवान्कमलेक्षणः॥आवां
जहिनयत्रोर्वीसलिलेनपरिप्लुता॥१०१॥ ॥ऋषि
रुवाच॥१०२॥तथेत्युक्त्वाभगवताशंखचक्रगदाभृता
॥कृत्वाचक्रेणवैछिन्नेजघनेशिरसीतयोः॥१०३॥एव २२
मेषासमुत्पन्नाब्रह्मणासंस्तुतास्वयम्॥प्रभावमस्यादे

व्यास्तु भूयः शृणु वदामि ते ॥ १०४ ॥ ॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीभगवती माहात्म्ये मधुकैटभवधो नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ शुभं भवतु ॥

॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



ऋषिरुवाच ॥१॥ ॥देवासुरमभूद्युद्धंपूर्णमब्द
शतंपुरा॥ महिषेसुराणामधिपेदेवानांचपुरंदरे॥२॥
तत्रासुरैर्महावीर्यैर्देवसैन्यंपराजितम्॥जित्वाचसक
लान्देवानिंद्रोभून्महिषासुरः॥३॥ततःपराजितादेवाः
पद्मयोनिंप्रजापतिम्॥पुरस्कृत्यगतास्तत्रयत्रेशगरु
डध्वजौ॥४॥यथावृत्तंतयोस्तद्वन्महिषासुरचेष्टितम्
॥त्रिदशाःकथयामासुर्देवाभिभवविस्तरम्॥५॥सू
र्येंद्राग्न्यनिलेंदूनांयमस्यवरुणस्यच॥अन्येषांचाधि
कारान्सःस्वयमेवाधितिष्ठति॥६॥स्वर्गान्निराकृताः

सर्वेतेनदेवगणाभुवि॥ विचरंतियथामर्त्यामहिषेणदु
रात्मना॥७॥ एतद्वःकथितंसर्वममरारिविचेष्टितम्॥
शरणंचप्रपन्नाःस्मोवधस्तस्यविचिंत्यताम्॥८॥इत्थं
निशम्यदेवानांवचांसिमधुसूदनः॥ चकारकोपंशंभु
श्चभ्रूकुटीकुटिलाननौ॥९॥ ततोतिकोपपूर्णस्यचक्रि
णोवदनात्ततः॥ निश्चक्राममहत्तेजोब्रह्मणःशंकरस्य
च॥१०॥ अन्येषांचैवदेवानांशक्रादीनांशरीरतः॥नि
र्गतंसुमहत्तेजस्तच्चैक्यंसमगच्छत॥११॥अतीवतेज
सःकूटंज्वलंतमिवपर्वतम्॥ददृशुस्तेसुरास्तत्रज्वा

लाव्याप्तदिगंतरम् ॥१२॥ अतुलंतत्रतत्तेजःसर्वदेव
शरीरजम् ॥ एकस्थंतदभून्नारीव्याप्तलोकत्रयंत्विषा
॥१३॥ यदभूच्छांभवंतेजस्तेनाजायततन्मुखम् ॥ या
म्येनचाभवन्केशा बाहवोविष्णुतेजसा ॥१४॥ सौम्ये
नस्तनयोर्युग्मंमध्यंचैंद्रेणचाभवत् ॥ वारुणेनचजंघो
रूनितंबस्तेजसाभुवः ॥१५॥ ब्रह्मणस्तेजसापादौत
दंगुल्योर्कतेजसा ॥ वसूनांचकरांगुल्यःकौबेरेणचना
सिका ॥१६॥ तस्यास्तुदंताःसंभूताःप्राजापत्येनतेज
सा ॥ नयनत्रितयंजज्ञेतथापावकतेजसा ॥१७॥ भ्रुवौ

स. २५

चसंध्ययोस्तेजः श्रवणावनिलस्यच ॥ अन्येषांचैवदे अ. २
वानांसंभवस्तेजसांशिवा ॥ १८ ॥ ततः समस्तदेवानांते
जोराशिसमुद्भवाम् ॥ तांविलोक्यमुदंप्रापुरमरामहि
षार्दिताः ॥ १९ ॥ शूलंशूलाद्विनिष्कृष्यददौतस्यैपिना
कधृक् ॥ चक्रंचदत्तवान्कृष्णः समुत्पाद्यस्वचक्रतः ॥
२० ॥ शंखंचवरुणः शक्तिंददौतस्यैहुताशनः ॥ मारु
तोदत्तवांश्चापंबाणपूर्णेतथेषुधी ॥ २१ ॥ वज्रमिंद्रः स
मुत्पाद्यकुलिशादमराधिपः ॥ ददौतस्यैसहस्राक्षो २५
घंटामैरावताद्गजात् ॥ २२ ॥ कालदंडाद्यमोदंडंपाशंचां

बुपतिर्ददौ ॥ प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमंडलुम्
॥ २३ ॥ समस्तरोमकूपेषु निजरश्मीन्दिवाकरः ॥ काल
श्च दत्तवान्खड्गं तस्याश्चर्म च निर्मलम् ॥ २४ ॥ क्षीरोद
श्चामलं हारमजरे च तथांबरे ॥ चूडामणिं तथा दिव्यं कुंड
ले कटकानि च ॥ २५ ॥ अर्धचंद्रं तथा शुभ्रं केयूरान्सर्व
बाहुषु ॥ नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमम् ॥ २६ ॥ अं
गुलीयकरत्नानि समस्तास्वंगुलीषु च ॥ विश्वकर्मा द-
दौ तस्यै परशुं चातिनिर्मलम् ॥ २७ ॥ अस्त्राण्यनेकरू
पाणि तथाभेद्यं च दंशनम् ॥ अम्लानपंकजां मालां शि

स. रस्युरसिचापराम् ॥ २८॥ अददज्जलधिस्तस्यैपंकजं अ.
२६ चातिशोभनम् ॥ हिमवान्वाहनंसिंहंरत्नानिविविधा २
निच ॥ २९ ॥ ददावशून्यंसुरयापानपात्रंधनाधिपः ॥ शे
षश्चसर्वनागेशोमहामणिविभूषितम् ॥ ३० ॥ नागहा
रंददौतस्यैधत्तेयःपृथिवीमिमाम् ॥ अन्यैरपिसुरैर्देवी
भूषणैरायुधैस्तथा ॥ ३१ ॥ संमानितानना दोच्चैःसाट्ट
हासंमुहुर्मुहुः ॥ तस्यानादेनघोरेणकृत्स्नमापूरितंन-
भः ॥ ३२ ॥ अमायतातिमहताप्रतिशब्दोमहानभूत् ॥ २६
चुक्षुभुःसकलालोकाःसमुद्राश्चचकंपिरे ॥ ३३ ॥ चचा

लवसुधाचेलुः सकलाश्चमहीधराः ॥ जयेतिचमुदादे
वास्तामूचुः सिंहवाहिनीम् ॥ ३४ ॥ तुष्टुवुर्मुनयश्चैनांभ
क्तिनम्रात्ममूर्तयः ॥ दृष्ट्वासमस्तंसंक्षुब्धंत्रैलोक्यम
मरारयः ॥ ३५ ॥ सन्नद्धाखिलसैन्यास्तेसमुत्तस्थुरुदा
युधाः ॥ आः किमेतदितिक्रोधादाभाष्यमहिषासुरः ॥
३६ ॥ अभ्यधावततंशब्दमशेषैरसुरैर्वृतः ॥ सददर्श
ततोदेवींव्याप्तलोकत्रयांत्विषा ॥ ३७ ॥ पादाक्रांत्यान
तभुवंकिरीटोल्लिखितांबराम् ॥ क्षोभिताशेषपातालां
धनुर्ज्यानिःस्वनेनताम् ॥ ३८ ॥ दिशोभुजसहस्रेणस

स॰ मंताद्याप्यसंस्थिताम्॥ ततः प्रववृतेयुद्धंतयादेव्यासु अ॰
२७ रद्विषाम्॥३९॥ शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगंत २
रम्॥ महिषासुरसेनानीश्चिक्षुराख्योमहासुरः॥४०
॥ युयुधेचामरश्चान्यैश्चतुरंगबलान्वितः॥ रथानाम
युतैःषड्भिरुदग्राख्योमहासुरः॥ ४१ ॥ अयुध्यतायुता
नांचसहस्रेणमहाहनुः॥ पंचाशद्भिश्चनियुतैरसिलो
मामहासुरः॥ ४२॥ अयुतानांशतैःषड्भिर्बाष्कलोयुयु
धेरणे॥ गजवाजिसहस्रौघैरनेकैःपरिवारितः॥ ४३॥ २७
वृतोरथानांकोट्याचयुद्धेतस्मिन्नयुध्यत॥ बिडाला

रथ्योयुतानांचपंचाशद्भिरयायुतैः॥ ४४॥ युयुधेसंयुगे
तत्ररथानांपरिवारितः॥अन्येचतत्रायुतशोरथनागह
यैर्वृताः॥ ४५॥ युयुधुःसंयुगेदेव्यासहतत्रमहासुराः॥
कोटिकोटिसहस्रैस्तुरथिनांदंतिनांतथा॥ ४६॥ हयानां
चवृतोयुद्धेतत्राभून्महिषासुरः॥ तोमरैर्भिंदिपालैश्वश
क्तिभिर्मुसलैस्तथा॥ ४७॥ युयुधुःसंयुगेदेव्याखङ्गैःपरशु
पट्टिशैः॥ केचिच्चचिक्षिपुःशक्तीःकेचित्पाशांस्तथापरे
॥ ४८॥ देवींखङ्गप्रहारैस्तुतेतांहंतुंप्रचक्रमुः॥सापिदेवी
ततस्तानिशस्त्राण्यस्त्राणिचंडिका॥ ४९॥ लीलयैवप्र

स. विच्छेदनिजशस्त्रास्त्रवर्षिणी ॥ अनायस्ताननादेवीस्तू अ.
२८ यमानासुरर्षिभिः ॥ ५० ॥ मुमोचासुरदेहेषुशस्त्राण्यस्त्रा २
णिचेश्वरी ॥ सोपिक्रुद्धोधुतसटोदेव्यावाहनकेसरी ॥ ५१
॥ चचारासुरसैन्येषुवनेष्विवहुताशनः ॥ निश्वासान्मुमु
चेयांश्चयुध्यमानारणेंबिका ॥ ५२ ॥ तएवसद्यःसंभूताग
णाःशतसहस्रशः ॥ युयुधुस्तेपरशुभिर्भिंधिपालासिप
ट्टिशैः ॥ ५३ ॥ नाशयंतोसुरगणान्देवीशक्त्युपबृंहिताः ॥
अवादयंतपटहान्गणाःशंखांस्तथापरे ॥ ५४ ॥ मृदंगांश्च २८
तथैवान्येतस्मिन्युद्धमहोत्सवे ॥ ततोदेवीत्रिशूलेनगदया

शक्तिदृष्टिभिः ॥ ५५ ॥ खड्गादिभिश्च शतशो निजघान
महासुरान् ॥ पातयामास चैवान्यान्घंटास्वनविमोहितान्
॥ ५६ ॥ असुरान्भुवि पाशेन बध्वा चान्यानकर्षयत् ॥ के
चिद्द्विधा कृतास्तीक्ष्णैः खड्गपातैस्तथापरे ॥ ५७ ॥ विपोथि
ता निपातेन गदया भुवि शेरते ॥ वेमुश्च केचिद्रुधिरं मुसले
न भृशं हताः ॥ ५८ ॥ केचिन्निपतिता भूमौ भिन्नाः शूलेन
वक्षसि ॥ निरंतराः शरौघेण कृताः केचिद्रणाजिरे ॥ ५९ ॥
सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ॥ केषांचिद्बाह
वश्छिन्नाश्छिन्नग्रीवास्तथापरे ॥ ६० ॥ शिरांसि पेतुरन्ये

स. २९

षामन्येमध्येविदारिताः॥विच्छिन्नजंघास्त्वपरेपेतुरुर्व्यां अ.
महासुराः॥६१॥एकबाह्वक्षिचरणाःकेचिद्देव्याद्विधाकृ २
ताः॥छिन्नेपिचान्येशिरसिपतिताःपुनरुत्थिताः॥६२॥क
बंधायुयुधुर्देव्यागृहीतपरमायुधाः॥ननृतुश्चापरेतत्रयुद्धे
तूर्यलयाश्रिताः॥६३॥कबंधाश्छिन्नशिरसःखड्गशक्त्यृ
ष्टिपाणयः॥तिष्ठतिष्ठेतिभाषंतोदेवीमन्येमहासुराः॥६४
॥पातितैरथनागाश्वैरसुरैश्चवसुंधरा॥अगम्यासाभवत्त
त्रयत्राभूत्समहारणः॥६५॥शोणितौघामहानद्यःसद्यस्त २९
त्रप्रसुस्रुवुः॥मध्येचासुरसैन्यस्यवारणासुरवाजिनाम्॥६६

॥ क्षणेनतन्महासैन्यमसुराणांतथांबिका॥ निन्येक्षयं
यथावन्हिस्तृणदारुमहाचयम्॥६७॥ सचसिंहोमहाना
दमुत्सृजन्धुतकेसरः॥ शरीरेभ्योऽमरारीणामसूनिववि
चिन्वति॥६८॥ देव्यागणैश्चतैस्तत्रकृतंयुद्धंतथासुरैः॥ य
थैषांतुतुषुर्देवाःपुष्पवृष्टिमुचोदिवि॥६९॥ ॥ इतिश्री
मार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीभगवतीमाहात्म्ये
महिषासुरसैन्यवधोनामद्वितीयोऽध्यायः॥२॥ ॥
॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

ऋषिरुवाच॥१॥ ॥निहन्यमानंतत्सैन्यमवलोक्य
महासुरः॥सेनानीश्चिक्षुरःकोपाद्ययौयोद्धुमथांबिकाम्
॥२॥सदेवींशरवर्षेणववर्षसमरेसुरः॥यथामेरुगिरेः
शृंगंतोयवर्षेणतोयदः॥३॥तस्यछित्वाततोदेवीलीलयै
वशरोत्करान्॥जघानतुरगान्बाणैर्यंतारंचैववाजिनाम्
॥४॥चिच्छेदचधनुःसद्योध्वजंचातिसमुच्छ्रितम्॥वि
व्याधचैवगात्रेषुछिन्नधन्वानमाशुगैः॥५॥सच्छिन्नध
न्वाविरथोहताश्वोहतसारथिः॥अभ्यधावततांदेवींख
ड्गचर्मधरोसुरः॥६॥सिंहमाहत्यखड्गेनतीक्ष्णधारेणमू

स. ३१ र्धनि॥आजघानभुजेसव्येदेवीमप्यतिवेगवान्॥७॥त- अ. ३
स्याःखड्गोभुजंप्राप्यपफालनृपनंदन॥ततोऽजग्राहशूलंस
कोपादरुणलोचनः॥८॥चिक्षेपचततस्तत्तुभद्रकाल्यां
महासुरः॥जाज्वल्यमानंतत्तेजोरविबिंबमिवांबरात्॥९
॥दृष्ट्वातदापतच्छूलंदेवीशूलममुंचत॥तच्छूलंशतधाते
ननीतंसचमहासुरः॥१०॥हतेतस्मिन्महावीर्येमहिषस्य
चमूपतौ॥आजगामगजारूढश्चामरस्त्रिदशार्दनः॥११
॥सोऽपिशक्तिंमुमोचाथदेव्यास्तामंबिकाद्रुतम्॥हुंकारा ३१
भिहतांभूमौपातयामासनिःप्रभाम्॥१२॥भग्नांशक्तिंनि

पतितांदृष्ट्वाक्रोधसमन्वितः॥चिक्षेपचामरःशूलंबाणै
स्तदपिसाछिनत्॥१३॥ततःसिंहःसमुत्पत्यगजकुंभां
तरेस्थितः॥बाहुयुद्धेनयुयुधेतेनोच्चैस्त्रिदशारिणा॥
१४॥युध्यमानौततस्तौतुतस्मान्नागान्महींगतौ॥युयुधा
तेतिसंरब्धौप्रहारैरतिदारुणैः॥१५॥ततोवेगात्खमुत्पत्य
निपत्यचमृगारिणा॥करप्रहारेणशिरश्चामरस्यपृथक्कृ
तम्॥१६॥उदग्रश्चरणेदेव्याशिलावृक्षादिभिर्हतः॥दंत
मुष्टितलैश्चैवकरालश्चनिपातितः॥१७॥देवीक्रुद्धागदा
पातैश्चूर्णयामासचोद्धतम्॥बाष्कलंभिंदिपालेनबाणैस्ता

स. म्रंतथांधकम्॥१८॥उग्रास्यमुग्रवीर्यंचतथैवचमहाहनु अ.
३२ म्॥त्रिनेत्राचत्रिशूलेनजघानपरमेश्वरी॥१९॥विडाल ३
स्यासिनाकायात्पातयामासवैशिरः॥दुर्धरंदुर्मुखंचोभौ
शरैर्निन्येयमक्षयम्॥२०॥एवंसंक्षीयमाणेतुस्वसैन्येम-
हिषासुरः॥माहिषेणस्वरूपेणत्रासयामासतान्गणा
न्॥२१॥कांश्चित्तुंडप्रहारेणक्षुरक्षेपैस्तथापरान्॥लांगू
लतांडितांश्चान्यान्शृंगाभ्यांचविदारितान्॥२२॥वेगेन
कांश्चिदपरान्नादेनभ्रमणेनच॥निश्वासपवनेनान्यान्पा ३२
तयामासभूतले॥२३॥निपात्यप्रमथानीकमभ्यधावतसो

सुरः॥ सिंहंहंतुंमहादेव्याःकोपंचक्रेततोंबिका॥२४॥सो
पिकोपान्महावीर्यःखुरक्षुण्णमहीतलः॥ शृंगाभ्यांपर्वता
नुच्चांश्चिक्षेपचननादच॥२५॥ वेगभ्रमणविक्षुण्णामही
तस्यव्यशीर्यत॥ लांगूलेनाहतश्चाब्धिःप्लावयामाससर्वतः
॥२६॥ धुतशृंगविभिन्नाश्चखंडंखंडंययुर्घनाः॥ श्वासा-
निलास्ताःशतशोनिपेतुर्नभसोचलाः॥२७॥ इतिक्रोध
समाध्मातमापतंतंमहासुरम्॥ दृष्ट्वासाचंडिकाकोपंत
द्वधायतदाकरोत्॥२८॥ साक्षिप्त्वातस्यवैपाशंतंबबंध
महासुरम्॥ तत्याजमाहिषंरूपंसोपिबद्धोमहामृधे॥२९

॥ ततःसिंहोभवत्सद्योयावत्तस्यांबिकाशिरः॥ छिनत्ति
तावत्पुरुषःखड्गपाणिरदृश्यत॥ ३०॥ ततएवाशुपुरुषंदे
वीचिच्छेदसायकैः॥ तंखड्गचर्मणासार्द्धंततःसोभून्महा
गजः॥ ३१॥ करेणचमहासिंहंतंचकर्षजगर्जच॥ कर्षत
स्तुकरंदेवीखड्गेननिरकृंतत॥ ३२॥ ततोमहासुरोभूयोमा
हिषंवपुरास्थितः॥ तथैवक्षोभयामासत्रैलोक्यंसचराच
रम्॥ ३३॥ ततःक्रुद्धाजगन्माताचंडिकापानमुत्तमम्॥
पपौपुनःपुनश्चैवजहासारुणलोचना॥ ३४॥ ननर्दचासु
रःसोपिबलवीर्यमदोद्धतः॥ विषाणाभ्यांचचिक्षेपचंडि

कांप्रतिभूधरान् ॥ ३५ ॥ साचतान्प्रहितांस्तेनचूर्णयंती
शरोत्करैः ॥ उवाचतंमदोन्द्धूतमुखरागाकुलाक्षरम् ॥ ३६
॥ ॥ देव्युवाच ॥ ३७ ॥ गर्जगर्जक्षणंमूढमधुयावत्पिबा
म्यहम् ॥ मयात्वयिहतेत्रैवगर्जिष्यंत्याशुदेवताः ॥ ३८ ॥
॥ ऋषिरुवाच ॥ ३९ ॥ एवमुक्त्वासमुत्पत्यसारूढातं
महासुरम् ॥ पादेनाक्रम्यकंठेचशूलेनैनमताडयत् ॥ ४०
॥ ततःसोपिपदाक्रांतस्तयानिजमुखात्ततः ॥ अर्द्धनि
ष्क्रांतएवासीद्देव्यावीर्येणसंवृतः ॥ ४१ ॥ अर्द्धनिष्क्रांतए
वासौयुध्यमानोमहासुरः ॥ तयामहासिनादेव्याशिरश्छि

स. २४

त्वानिपातितः॥ ४२॥ ततोहाहाकृतंसर्वंदैत्यसैन्यंननाशयत्॥ प्रहर्षंचपरंजग्मुःसकलादेवतागणाः॥ ४३॥ तुष्टुवुस्तांसुरादेवींसहदिव्यैर्महर्षिभिः॥ जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः॥ ४४॥ ॥ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीभगवतीमाहात्म्येमहिषासुरवधोनामतृतीयोऽध्यायः॥ ३॥ ॥ श्रीरस्तु॥ ॥

॥ छ॥ ॥ छ॥ ॥ छ॥ ॥ छ॥ ॥ छ॥

अ. ३

२४

स. ॥ ॥ऋषिरुवाच॥१॥शक्रादयःसुरगणानिहतेति अ.
३५ वीर्येतस्मिन्दुरात्मनिसुरारिबलेचदेव्या॥तांतुष्टुवुःप्रणति ४
नम्रशिरोधरांसावाग्भिःप्रहर्षपुलकोद्गमचारुदेहाः॥२॥
देव्याययाततमिदंजगदात्मशक्त्यानिःशेषदेवगणशक्ति
समूहमूर्त्या॥तामंबिकामखिलदेवमहर्षिपूज्यांभक्त्यान
ताःस्मविदधातुशुभानिसानः॥३॥यस्याःप्रभावमतुलं
भगवाननंतोब्रह्माहरश्चनहिवक्तुमलंबलंच॥साचंडि
काखिलजगत्परिपालनायनाशायचासुरभयस्यमतिंक ३५
रोतु॥४॥याश्रीःस्वयंसुकृतिनांभवनेष्वलक्ष्मीःपापात्म

नांकृतधियांहृदयेषुबुद्धिः॥ श्रद्धासतांकुलजनप्रभवस्य
लज्जातांत्वांनताःस्मपरिपालयदेविविश्वम्॥ ५॥ किंव
र्णयामतवरूपमचिंत्यमेतत्किंचातिवीर्यमसुरक्षयकारि
भूरि॥ किंचाहवेषुचरितानितवाद्भुतानिसर्वेषुदेव्यसुरदे
वगणादिकेषु॥ ६॥ हेतुःसमस्तजगतांत्रिगुणापिदोषैर्न
ज्ञायसेहरिहरादिभिरप्यपारा॥ सर्वाश्रयाखिलमिदंज
गदंशभूतमव्याकृताहिपरमाप्रकृतिस्त्वमाद्या॥ ७॥ य
स्याःसमस्तसुरतासमुदीरणेनतृप्तिंप्रयांतिसकलेषुम
खेषुदेवी॥ स्वाहासिवैपितृगणस्यचतृप्तिहेतुरुच्चार्यसे

स. ३६

त्वमतएवजनैःस्वधाच ॥८॥ यामुक्तिहेतुरविचिंत्यमहा

व्रतात्वमभ्यस्यसेसुनियतेंद्रियतत्वसारैः॥ मोक्षार्थिभि

र्मुनिभिरस्तसमस्तदोषैर्विद्यासिसाभगवतीपरमाहिदे

वि ॥९॥ शब्दात्मिकासुविमलर्ग्यजुषांनिधानमुद्गीथरम्य

पदपाठवतांचसाम्नाम् ॥ देवित्रयीभगवतीभवभावना

यवार्त्तासिसर्वजगतांपरमार्त्तिहंत्री ॥१०॥ मेधासिदेवि

विदिताखिलशास्त्रसाराढुर्गासिदुर्गभवसागरनौरसंगा

॥ श्रीःकैटभारिहृदयैककृताधिवासागौरीत्वमेवशशि-

मौलिकृतप्रतिष्ठा ॥११॥ ईषत्सहासममलंपरिपूर्णचंद्र

अ. ४ ३६

बिंबानुकारिकनकोत्तमकांतिकांतम् ॥ अत्यद्भुतंप्रहृत
मात्तरुषातथापिवक्त्रंविलोक्यसहसामहिषासुरेण ॥ १२
॥ दृष्ट्वातुदेविकुपितंभ्रुकुटीकरालमुद्यच्छशांकसदृश-
च्छवियन्नसद्यः ॥ प्राणान्मुमोचमहिषस्तदतीवचित्रंकै
र्जीव्यतेहिकुपितांतकदर्शनेन ॥ १३ ॥ देविप्रसीदपरमा
भवतीभवायसद्योविनाशयसिकोपवतीकुलानि ॥ विज्ञा
तमेतदधुनैवयदस्तमेतन्नीतंबलंसुविपुलंमहिषासुर
स्य ॥ १४ ॥ तेसंमताजनपदेषुधनानितेषांतेषांयशांसि
चनसीदतिधर्मवर्गः ॥ धन्यास्तएवनिभृतात्मजभृत्यदा

रायेषांसदाभ्युदयदाभवतीप्रसन्ना ॥१५॥ धर्म्याणिदे
विसकलानिसदैवकर्माण्यत्यादृतःप्रतिदिनंसुकृतीक
रोति॥ स्वर्गंप्रयांतिचततोभवतीप्रसादाल्लोकत्रयेपिफ
लदाननुदेवितेन॥१६॥ दुर्गेस्मृताहरसिभीतिमशेषजं
तोःस्वस्थैःस्मृतामतिमतीवशुभांददासि॥ दारिद्र्यदुः
खभयहारिणिकात्वदन्यासर्वोपकारकरणायसदार्द्र
चित्ता॥१७॥ एभिर्हतैर्जगदुपैतिसुखंतथैतेकुर्वंतुनाम
नरकायचिरायपापम्॥ संग्राममृत्युमधिगम्यदिवंप्रयां
तुमत्वेतिनूनमहितान्विनिहंसिदेवि॥१८॥ दृष्ट्वैवकिंन

भवतीप्रकरोतिभस्मसर्वासुरानरिषुयत्प्रहिणोषिशस्त्र
म् ॥ लोकान्प्रयांतुरिपवोपिहिशस्त्रपूताइत्थंमतिर्भवति
तेष्वपितेषुसाध्वी ॥ १९ ॥ खड्गप्रभानिकरविस्फुरणैस्त-
थोग्रैःशूलाग्रकांतिनिवहेनदृशोसुराणाम् ॥ यन्नागता
विलयमंशुमदिंदुखंडयोग्याननंतवविलोकयतांतदेतत्
॥ २० ॥ दुर्वृत्तवृत्तशमनंतवदेविशीलंरूपंतथैतदविचिंत्य
मतुल्यमन्यैः ॥ वीर्यंचहंतृहृतदेवपराक्रमाणांवैरिष्वपि
प्रकटितैवदयात्वयेत्थम् ॥ २१ ॥ केनोपमाभवतुतेस्यप
राक्रमस्यरूपंचशत्रुभयकार्यतिहारिकुत्र ॥ चित्तेकृपा

समरनिष्ठुरताचदृष्टात्वय्येवदेविवरदेभुवनत्रयेपि॥२२
॥त्रैलोक्यमेतदखिलंरिपुनाशनेनत्रातंत्वयासमरमूर्द्धनि
तेपिहत्वा॥नीतादिवंरिपुगणाभयमप्यपास्तमस्माकमु
न्मदसुरारिभवंनमस्ते॥२३॥शूलेनपाहिनोदेविपाहिख
ड्गेनचांबिके॥घंटास्वनेननःपाहिचापज्यानिस्वनेनच॥२४
॥प्राच्यांरक्षप्रतीच्यांचचंडिकेरक्षदक्षिणे॥भ्रामणेना
त्मशूलस्यउत्तरस्यांतथेश्वरि॥२५॥सौम्यानियानिरूपा
णित्रैलोक्येविचरंतिते॥यानिचात्यंतघोराणितैरक्षास्मां
स्तयाभुवम्॥२६॥खड्गशूलगदादीनियानिचास्त्राणितें

बिके॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः॥२७॥
ऋषिरुवाच॥२८॥ एवंस्तुतासुरैर्दिव्यैःकुसुमैर्नंदनो
द्भवैः॥ अर्चिताजगतांधात्रीतथागंधानुलेपनैः॥२९॥ भ
क्त्यासमस्तैस्त्रिदशैर्दिव्यैर्धूपैःसुधूपिता॥ प्राहप्रसाद
सुमुखीसमस्तान्प्रणतान्सुरान्॥३०॥ ॥देव्युवाच
॥३१॥ व्रियतांत्रिदशाःसर्वैर्यदस्मत्तोभिवांछितम्॥३२
॥ ॥देवाऊचुः॥३३॥ भगवत्याकृतंसर्वंनकिंचिदवशि
ष्यते॥३४॥ यदयंनिहतःशत्रुरस्माकंमहिषासुरः॥ यदि
चापिवरोदेयस्त्वयास्माकंमहेश्वरि॥३५॥ संस्मृतासंस्मृ

स.
२९

ताल्वन्नोहिंसेथाः परमापदः ॥ यश्चमर्त्यस्तवैरेभिस्त्वां भ.
स्तोष्यत्यमलानने ॥ ३६ ॥ तस्यवित्तर्द्धिविभवैर्धनदारा ४
दिसंपदाम् ॥ वृद्धयेस्मत्प्रसन्नात्वंभवेथाः सर्वदांबिके ॥
३७ ॥ ॥ ऋषिरुवाच ॥ ३८ ॥ ॥ इतिप्रसादि
तादेवैर्जगतोर्थेतथात्मनः ॥ तथेत्युक्त्वाभद्रकालीबभूवां
तर्हितानृप ॥ ३९ ॥ इत्येतत्कथितंभूपसंभूतासायथापु-
रा ॥ देवीदेवशरीरेभ्योजगत्त्रयहितैषिणी ॥ ४० ॥ पुन
श्चगौरीदेहात्सासमुद्भूतायथाभवत् ॥ वधायदुष्टदै २९
त्यानांतथाशुंभनिशुंभयोः ॥ ४१ ॥ रक्षणायचलोकानां

देवानामुपकारिणी ॥ तच्छृणुष्वमयाख्यातंयथावत्
कथयामिते ॥ ४२ ॥ ॥ इतिश्रीमार्कंडेयपुराणेसा
वर्णिकेमन्वंतरेदेवीभगवतीमाहात्म्येशक्रादिस्तुति
र्नामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीरस्तु ॥ ॥
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ॥ऋषिरुवाच॥१॥ पुराशुंभनिशुंभाभ्यामसुरा
भ्यांशचीपतेः॥ त्रैलोक्यंयज्ञभागाश्चहृतामदबलाश्र
यात्॥२॥ तावेवसूर्यतांतद्वदधिकारंतथैंदवम्॥ कौबेर
मथयाम्यंचचक्रातेवरुणस्यच॥३॥ तावेवपवनर्द्धिंच
चक्रतुर्वह्निकर्मच॥ ततोदेवाविनिर्धूताभ्रष्टराज्याःप
राजिताः॥४॥ हृताधिकारास्त्रिदशास्ताभ्यांसर्वेनिरा
कृताः॥ महासुराभ्यांतांदेवींसंस्मरंत्यपराजिताम्॥५॥
तयास्माकंवरोदत्तोयथापत्सुस्मृताखिलाः॥ भवतांना
शयिष्यामितत्क्षणात्परमापदः॥६॥ इतिकृत्वामतिंदेवा

स. हिमवंतंनगेश्वरम् ॥ जग्मुस्तत्रततोदेवींविष्णुमायांप्रतु अ.
४१ ष्टुवुः ॥ ७ ॥ ॥ देवाऊचुः ॥ ८ ॥ नमोदेव्यैमहादेव्यैशि ५
वायैसततंनमः ॥ नमः प्रकृत्यैभद्रायैनियताः प्रणताःस्म
ताम् ॥ ९ ॥ रौद्रायैनमोनित्यायैगौर्यैधात्र्यैनमोनमः ॥ ज्यो
त्स्नायैचेंदुरूपिण्यैसुखायैसततंनमः ॥ १० ॥ कल्याण्यै
प्रणतांवृद्ध्यैसिद्ध्यैकूर्म्यैनमोनमः ॥ नैर्ऋत्यैभूभृतांलक्ष्म्यै
शर्वाण्यैतेनमोनमः ॥ ११ ॥ दुर्गायैदुर्गपारायैसारायैसर्व
कारिण्यै ॥ ख्यात्यैतथैवकृष्णायैधूम्रायैसततंनमः ॥ १२ ४१
॥ अतिसौम्यातिरौद्रायैनतास्तस्यैनमोनमः ॥ नमोजग

त्मातिष्ठायैदेव्यैकृत्यैनमोनमः॥१३॥ यादेवीसर्वभूतेषु
विष्णुमायेतिशब्दिता॥ नमस्तस्यै॥१४॥ नमस्तस्यै॥
१५॥ नमस्तस्यैनमोनमः॥१६॥ यादेवीसर्वभूतेषुचेतने
त्यभिधीयते॥ नमस्तस्यै०॥१९॥ यादेवीसर्वभूतेषुबुद्धि
रूपेणसंस्थिता॥ नमस्तस्यै०॥२२॥ यादेवी० निद्रारूपे-
ण०॥ नमस्तस्यै०॥२५॥ यादेवी० क्षुधारूपेण०॥ नमस्त
स्यै०॥२८॥ यादेवी० छायारूपेण०॥ नमस्तस्यै०॥३१॥
यादेवी० शक्तिरूपेण०॥ नमस्तस्यै०॥३४॥ यादेवी० तृष्णा
रूपेण०॥ नमस्तस्यै०॥३७॥ यादेवी० क्षांतिरूपेण०॥ न

स. मस्तस्यै०॥४०॥ यादेवी०जातिरूपेण०॥नमस्तस्यै०॥ अ
४२ ४३॥ यादेवी०लज्जारूपेण०॥नमस्तस्यै०॥४६॥यादे० ५
शांतिरूपेण०॥नमस्तस्यै०॥४९॥ यादेवी० श्रद्धारूपे०॥
नमस्तस्यै०॥५२॥ यादेवी० कांतिरूपेण०॥नमस्तस्यै०॥
५५॥ यादेवी०लक्ष्मीरूपेण०॥ नमस्तस्यै०॥५८॥यादे०
वृत्तिरूपेण०॥ नमस्तस्यै०॥६१॥ यादेवी०स्मृतिरूपेण०
॥नमस्तस्यै०॥६४॥ यादेवी० दयारूपेण०॥ नमस्तस्यै०
॥६७॥ यादेवी०तुष्टिरूपेण०॥नमस्तस्यै०॥७०॥यादेवी० ४२
मातृरूपेण०॥ नमस्तस्यै०॥७३॥ यादेवी० भ्रांतिरूपेण०॥

नमस्तस्यै० ॥७६॥ इंद्रियाणामधिष्ठात्रीभूतानांचाखिले
षुया ॥ भूतेषुसततंतस्यैव्याप्त्यैदेव्यैनमोनमः ॥७७॥ चि
तिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिताजगत् ॥ नमस्तस्यै०
॥८०॥ स्तुतासुरैःपूर्वमभीष्टसंश्रयात्तथासुरेंद्रेणदिने
षुसेविता ॥ करोतुसानःशुभहेतुरीश्वरीशुभानिभद्रा-
ण्यभिहंतुचापदः ॥८१॥ यासांप्रतंचोद्धतदैत्यतापितै
रस्माभिरीशाचसुरैर्नमस्यते ॥ याचस्मृतातत्क्षणमेव
हंतिनःसर्वापदोभक्तिविनम्रमूर्त्तिभिः ॥८२॥ ॥ ऋ
षिरुवाच ॥८३॥ एवंस्तवाभियुक्तानांदेवानांतत्रपार्व-

स. नी ॥ स्नातुमभ्याययौतोयेजाह्नव्यानृपनंदन ॥ ८४ ॥ साब्र अ.
४३ वीत्तान्सुरान्सुभ्रुर्भवद्भिस्तूयतेत्रका ॥ शरीरकोशतश्चा ५
स्याःसमुद्भूताब्रवीच्छिवा ॥ ८५ ॥ स्तोत्रंममैतत्क्रियतेशुं
भदैत्यनिराकृतैः ॥ देवैःसमस्तैःसमरेनिशुंभेनपराजितैः
॥ ८६ ॥ शरीरकोशाद्यत्तस्याःपार्वत्यानिःसृतांबिका ॥ कौ
शिकीतिसमस्तेषुततोलोकेषुगीयते ॥ ८७ ॥ तस्यांविनि
र्गतायांतुकृष्णाभूत्सापिपार्वती ॥ कालिकेतिसमाख्या
ताहिमाचलकृताश्रया ॥ ८८ ॥ ततोंबिकांपरंरूपंबिभ्रा ४३
णांसुमनोहरम् ॥ ददर्शचंडोमुंडश्चभृत्यौशुंभनिशुंभयोः

॥८९॥ ताभ्यांशुंभायचाख्यातासातीवस्कमनोहरा॥का
प्यास्तेस्त्रीमहाराजभासयंतीहिमाचलम्॥९०॥नैवतादृ
कृक्कचिद्रूपंदृष्टंकेनचिदुत्तमम्॥ज्ञायतांकाप्यसौदेवीगृ
ह्यतांचासुरेश्वर॥९१॥स्त्रीरत्नमतिचार्वंगीद्योतयंती
दिशस्त्विषा॥सातुतिष्ठतिदैत्येंद्रतांभवान्द्रष्टुमर्हति॥
९२॥यानिरत्नानिमणयोगजाश्वादीनिवैप्रभो॥त्रैलोक्ये
तुसमस्तानिसांप्रतंभांतितेगृहे॥९३॥ऐरावतःसमानी
तोगजरत्नंपुरंदरात्॥पारिजाततरुश्चायंतथैवोच्चैःश्र
वाहयः॥९४॥विमानंहंससंयुक्तमेतत्तिष्ठतितेंगणे॥

रत्नभूतमिहानीतंयदासीद्वेधसोद्भुतम्॥९५॥ निधिरेष
महापद्मःसमानीतोधनेश्वरात्॥ किंजल्किनींददौचा-
ब्धिर्मालामम्लानपंकजाम्॥९६॥ छत्रंतेवारुणंगेहेकांच
नस्रावितिष्ठति॥ तथायंस्यंदनवरोयःपुरासीत्प्रजापतेः
॥९७॥ मृत्योरुत्क्रांतिदानामशक्तिरीशत्वयाहृता॥ पा
शःसलिलराजस्यभ्रातुस्तवपरिग्रहे॥९८॥ निशुंभस्या
ब्धिजाताश्चसमस्तारत्नजातयः॥ वह्निरपिददौतुभ्यम
ग्निशौचेचवाससी॥९९॥ एवंदैत्येंद्ररत्नानिसमस्तान्या
हृतानिते॥ स्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते

॥१००॥ ॥ऋषिरुवाच॥१०१॥ निशम्येतिवचःशुंभः
सतदाचंडमुंडयोः॥ प्रेषयामाससुग्रीवंदूतंदेव्यामहासु
रम्॥१०२॥ इतिचेतिचवक्तव्यासागत्वावचनान्मम॥य
थाचाभ्येतिसंप्रीत्यातथाकार्यंत्वयालघु॥१०३॥सतत्र
गत्वायत्रास्तेशैलोद्देशेतिशोभने॥सादेवीतांततःप्राहश्ल
क्ष्णंमधुरयागिरा॥१०४॥ ॥दूतउवाच॥१०५॥देवि
दैत्येश्वरःशुंभस्त्रैलोक्येपरमेश्वरः॥दूतोहंप्रेषितस्ते
नत्वत्सकाशमिहागतः॥१०६॥अव्याहताज्ञःसर्वासु
यःसदादेवयोनिषु॥ निर्जिताखिलदैत्यारिःसयदाहशृ

स· णुधतत् ॥ १०७ ॥ ममत्रैलोक्यमखिलंममदेवावशानुगाः अ·
४५ ॥ यज्ञभागानहंसर्वानुपाश्नामिपृथक्पृथक् ॥ १०८ ॥ त्रै ५
लोक्येवररत्नानिममवश्यान्यशेषतः ॥ तथैवगजरत्नंच
हृत्वादेवेंद्रवाहनम् ॥ १०९ ॥ क्षीरोदमथनोद्भूतमश्वरत्नंम
मामरैः ॥ उच्चैःश्रवससंज्ञंतत्प्रणिपत्यसमर्पितम् ॥ ११०
॥ यानिचान्यानिदेवेषुगंधर्वेषूरगेषुच ॥ रत्नभूतानिभू
तानितानिमय्येवशोभने ॥ १११ ॥ स्त्रीरत्नभूतांत्वांदेवि
लोकेमन्यामहेवयम् ॥ सात्वमस्मानुपागच्छयतोरत्न ४५
भुजोवयम् ॥ ११२ ॥ मांवाममानुजंवापिनिशुंभमुरुवि

क्रमम् ॥ भजत्वंचंचलापांगीरत्नभूतासिवैयतः ॥११३
॥ परमैश्वर्यमतुलंप्राप्स्यसेमत्परिग्रहात् ॥ एतद्बुध्या
समालोच्यमत्परिग्रहतांव्रज ॥ ११४ ॥ ॥ ऋषिरुवा
च ॥ ११५ ॥ इत्युक्तासातदादेवीगंभीरांतस्मिताजगौ
॥ दुर्गाभगवतीभद्रायययेदंधार्यतेजगत् ॥ ११६ ॥ ॥
श्रीदेव्युवाच ॥ ११७ ॥ सत्यमुक्तंत्वयानात्रमिथ्याकिंचि
त्वयोदितम् ॥ त्रैलोक्याधिपतिःशुंभोनिशुंभश्चापि-
तादृशः ॥ ११८ ॥ किंत्वत्रयत्प्रतिज्ञातंमिथ्यातत्क्रियते
कथम् ॥ श्रूयतामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ११९

स. योमांजयतिसंग्रामेयोमेदर्पंव्यपोहति ॥ योमेप्रतिबलो अ.
४६ लोकेसमेभर्त्ताभविष्यति ॥ १२० ॥ तदागच्छतुशुंभोत्रनि ५
शुंभोवामहासुरः ॥ मांजित्वाकिंचिरेणात्रपाणिंगृह्णातु
मेलघु ॥ १२१ ॥ ॥ दूतउवाच ॥ १२२ ॥ अवलिप्तासिमै
वंब्रूहिमवमाग्रतः ॥ त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुं
भनिशुंभयोः ॥ १२३ ॥ अन्येषामपिदैत्यानांसर्वेदेवानवै
युधि ॥ तिष्ठंतिसंमुखेदेविकिंपुनःस्त्रीत्वमेकिका ॥ १२४
॥ इंद्राद्याःसकलादेवास्तस्थुर्येषांनसंयुगे ॥ शुंभादीनां ४६
कथंतेषांस्त्रीप्रयास्यसिसंमुखम् ॥ १२५ ॥ सात्वंगच्छ

मयैवोक्तापार्श्वंशुंभनिशुंभयोः॥ केशाकर्षणनिर्धूत
गौरवामागमिष्यसि॥ १२६॥ ॥ श्रीदेव्युवाच॥ १२७
॥ एवमेतद्बलीशुंभोनिशुंभश्चातिवीर्यवान्॥ किंकरोमि
प्रतिज्ञामेयदनालोचितापुरा॥ १२८॥ सत्वंगच्छमयैवोक्तं
यदेतत्सर्वमादृतः॥ तदाचक्ष्वासुरेंद्रायसचयुक्तंकरो
तुतत्॥ १२९॥ ॥ इतिश्रीमार्कंडेयपुराणेसावर्णि
केमन्वंतरेदेवीभगवतीमाहात्म्येदेवीदूतसंवादोनामपं
चमोऽध्यायः॥ ५॥ ॥ श्रीरस्तु॥ ॥
॥ छ॥ ॥ छ॥ ॥ छ॥ ॥ छ॥ ॥ छ॥

॥ ॥ऋषिरुवाच॥१॥ इत्याकर्ण्यवचोदेव्याःसदू
तोमर्षपूरितः॥समाचष्टसमागम्यदैत्यराजायविस्त
रात्॥२॥ तस्यदूतस्यतद्वाक्यमाकर्ण्यासुरराट्ततः
॥सक्रोधःप्राहदैत्यानामधिपंधूम्रलोचनम्॥३॥ हे
धूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः॥तामानयब
लाद्दुष्टांकेशाकर्षणविह्वलाम्॥४॥ तत्परित्राणदःक
श्चिद्यदिवोत्तिष्ठतेपरः॥सहंतव्योमरोवापियक्षोगंध
र्वएववा॥५॥ ॥ऋषिरुवाच॥६॥ तेनाज्ञप्तस्ततः
शीघ्रंसदैत्योधूम्रलोचनः॥वृतःषष्ट्यासहस्राणाम

सुराणांद्रुतंययौ ॥ ७ ॥ सदृष्ट्वातांततोदेवींतुहिनाच
लसंस्थिताम् ॥ जगादोच्चैःप्रयाहीतिमूलंशुंभनिशुंभ
योः ॥ ८ ॥ नचेत्प्रीत्याद्यभवतीमद्भर्त्तारमुपैष्यति ॥ ततो
बलान्नयाम्येषकेशाकर्षणविह्वलाम् ॥ ९ ॥ ॥ श्रीदे
व्युवाच ॥ १० ॥ दैत्येश्वरेणप्रहितोबलवान्बलसंवृतः ॥ ब
लान्नयसिमामेवंततःकिंतेकरोम्यहम् ॥ ११ ॥ ॥ ऋषि
रुवाच ॥ १२ ॥ इत्युक्तःसोभ्यधावत्तामसुरोधूम्रलोचनः
॥ हुंकारेणैवतंभस्मसाचकारांबिकाततः ॥ १३ ॥ अथ
क्रुद्धंमहासैन्यमसुराणांतथांबिका ॥ ववर्षसायकैस्ती

क्ष्णैस्तथाशक्तिपरश्वधैः ॥ १४ ॥ ततोधुतसटःकोपात्
कृत्वानादंसुभैरवम् ॥ पपातासुरसेनायांसिंहोदेव्याः
स्ववाहनः ॥ १५ ॥ कांश्चित्करप्रहारेणदैत्यानास्येनचाप
रान् ॥ आक्रांत्याचाधरेणान्यान्सजघानमहासुरान्
॥ १६ ॥ केषांचित्पाटयामासनखैःकोष्ठानिकेसरी ॥ त
थातलप्रहारेणशिरांसिकृतवान्पृथक् ॥ १७ ॥ विच्छि
न्नबाहुशिरसःकृतास्तेनतथापरे ॥ पपौचरुधिरंकोष्ठा
दन्येषांधुतकेसरः ॥ १८ ॥ क्षणेनतद्बलंसर्वंक्षयंनीतंम
हात्मना ॥ तेनकेसरिणादेव्यावाहनेनातिकोपिना ॥ १९

स० श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनम् ॥ बलं च क्षयि अ०
४१ तं कृत्स्नं देवीकेसरिणा ततः ॥२०॥ चुकोप दैत्याधिपतिः ६
शंभः प्रस्फुरिताधरः ॥ आज्ञापयामास च तौ चंडमुंडौ महा
सुरौ ॥२१॥ हे चंड हे मुंड बलैर्बहुभिः परिवारितौ ॥ तत्र ग
च्छत गत्वा च सा समानीयतां लघु ॥२२॥ केशेष्वाकृष्य
बध्वा वा यदि वः संशयो युधि ॥ तदाशेषायुधैः सर्वैरसु
रैर्विनिहन्यताम् ॥२३॥ तस्यां हतायां दुष्टायां सिंहे च विनि
पातिते ॥ शीघ्रमागम्यतां बध्वा गृहीत्वा तामथांबिकाम् ॥ ४१
२४॥ ॥ इति श्रीमा० धूम्रलोचनवधो नाम षष्ठोध्यायः ६

स ॥ ॥ ऋषिरुवाच॥१॥ आज्ञप्तास्तेततोदैत्याश्चंड अ
५० मुंडपुरोगमाः॥ चतुरंगबलोपेताययुरभ्युद्यतायुधाः॥ ७
२॥ ददृशुस्तेततोदेवीमीषद्धासांव्यवस्थिताम्॥ सिंह
स्योपरिशैलेंद्रशृंगेमहतिकांचने॥३॥ तेदृष्ट्वातांसमा
दातुमुद्यमंचक्रुरुद्यताः॥ आकृष्टचापासिधरास्तथा
न्येतत्समीपगाः॥४॥ ततःकोपंचकारोच्चैरंबिकातान
रीन्प्रति॥ कोपेनचास्यावदनंमषीवर्णमभूत्तदा॥५॥
भ्रुकुटीकुटिलात्तस्यललाटफलकाद्द्रुतम्॥ कालीक ५०
रालवदनाविनिष्क्रांतासिपाशिनी॥६॥ विचित्रखट्वांग

गधरानरमालाविभूषणा ॥ द्वीपिचर्मपरीधानाशुष्कमां
सातिभैरवा ॥ ७ ॥ अतिविस्तारवदनाजिह्वाललनभी
षणा ॥ निमग्नारक्तनयनानादापूरितदिङ्मुखा ॥ ८ ॥
सावेगेनाभिपतितावातयंतीमहासुरान् ॥ सैन्येतत्रसु
रारीणामभक्षयततद्बलम् ॥ ९ ॥ पार्ष्णिग्राहांकुशग्राही
योधघंटासमन्वितान् ॥ समादायैकहस्तेनमुखेचिक्षेप
वारणान् ॥ १० ॥ तथैवयोधंतुरगैरथंसारथिनासह ॥ नि
क्षिप्यवक्त्रेदशनैश्चर्वयंत्यतिभैरवम् ॥ ११ ॥ एकंजग्राह
केशेषुग्रीवायामथचापरम् ॥ पादेनाक्रम्यचैवान्यमुरसा

स. ५१

न्यमपोथयत् ॥ १२ ॥ तैर्मुक्तानि च शस्त्राणि महास्त्रा

णि तथासुरैः ॥ मुखेन जग्राह रुषा दशनैर्मथितान्यपि ॥

१३ ॥ बलिनां तद्बलं सर्वमसुराणां महात्मनाम् ॥ ममर्दाभ

क्षयच्चान्यानन्यांश्चाताडयत्तथा ॥ १४ ॥ असिना निह

ताः केचित्केचित्खट्वांगताडिताः ॥ जग्मुर्विनाशमसुरा

दंताग्राभिहतास्तथा ॥ १५ ॥ क्षणेन तद्बलं सर्वमसुरा

णां निपातितम् ॥ दृष्ट्वा चंडोभिदुद्राव तां कालीमतिभी

षणाम् ॥ १६ ॥ शरवर्षैर्महाभीमैर्भीमाक्षीं तां महासुरः ॥

छादयामास चक्रैश्च मुंडः क्षिप्तैः सहस्रशः ॥ १७ ॥ तानि च

अ. ७ ५१

क्राण्यनेकानिविशमानानितन्मुखम् ॥ बभुर्यथार्कबिंबानिसुबहूनिघनोदरम् ॥१८॥ ततोजहासातिरुषाभीमंभैरवनादिनी ॥ कालीकरालवक्त्रांतर्दुर्दर्शदशनोज्ज्वला ॥१९॥ उत्थायचमहासिंहंदेवीचंडमधावत ॥ गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाच्छिनत् ॥२०॥ अथमुंडोभ्यधावत्तांदृष्ट्वाचंडंनिपातितम् ॥ तमप्यपातयद्भूमौसाखड्गाभिहतंरुषा ॥२१॥ हतशेषंततःसैन्यंदृष्ट्वाचंडंनिपातितम् ॥ मुंडंचसुमहावीर्यंदिशोभेजेभयातुरम् ॥२२॥ शिरश्चंडस्यकालीचगृहीत्वामुंडमेवच ॥ प्रा

स. हप्रचंडाट्टहासमिश्रमभ्येत्यचंडिकाम् ॥ २३ ॥ मयातवा अ.
५२ त्रोपहृतौचंडमुंडौमहापशू ॥ युद्धयज्ञेस्वयंशुंभंनिशुंभं ७
चहनिष्यसि ॥ २४ ॥ ॥ ऋषिरुवाच ॥ २५ ॥ ॥ ता
वानीतौततोदृष्ट्वाचंडमुंडौमहासुरौ ॥ उवाचकालींक
ल्याणीललितंचंडिकावचः ॥ २६ ॥ यस्माच्चंडंचमुंडंचगृ
हीत्वात्वमुपागता ॥ चामुंडेतिततोलोकेख्यातादेविभ-
विष्यसि ॥ २७ ॥ ॥ इतिश्रीमार्कंडेयपुराणेसावर्णि
केमन्वंतरेदेवीभगवतीमाहात्म्येचंडमुंडवधोनामसप्त ५२
मोऽध्यायः ॥ ७ ॥ ॥ श्रीरस्तु ॥ ॥ शुभम् ॥

स. ॥ ॥ऋषिरुवाच॥१॥ चंडेचनिहतेदैत्येमुंडेचविनि अ.
५३ पातिते॥ बहुलेषुचसैन्येषुक्षयितेष्वसुरेश्वरः॥२॥ त ८
तःकोपपराधीनचेताः शुंभः प्रतापवान्॥ उद्योगंसर्वसै
न्यानांदैत्यानामादिदेशह॥३॥ अद्यसर्वबलैर्दैत्याःष
डशीतिरुदायुधाः॥ कंबूनांचतुराशीतिर्निर्यांतुस्वबलै
र्वृताः॥४॥ कोटिवीर्याणिपंचाशदसुराणांकुलानिवै॥
शतंकुलानिधूम्राणांनिर्गच्छंतुममाज्ञया॥५॥ कालि
कादौर्हृदामौर्याःकालकेयास्तथासुराः॥युद्धायसज्जा ५३
निर्यांतुआज्ञयात्वरितामम॥६॥ इत्याज्ञाप्यासुरपतिः

शंभोभैरवशासनः॥ निर्जगाममहासैन्यसहस्रैर्बहुभि
र्वृतः॥७॥ आयातंचंडिकादृष्ट्वातत्सैन्यमतिभीषणम्
॥ज्याःस्वनैःपूरयामासधरणीगगनांतरम्॥८॥ ततःसिं
होमहानादमतीवकृतवान्नृप॥ घंटास्वनेनतन्नादमंबि
काचोपबृंहयत्॥९॥ धनुर्ज्यासिंहघंटानांनादापूरित
दिङ्मुखा॥ निनादैर्भीषणैःकालीजिग्येविस्तारितानना॥
॥१०॥ तन्निनादमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशम्॥ देवी
सिंहस्तथाकालीसरोषैःपरिवारिता॥११॥ एतस्मिन्नं
तरेभूपविनाशायसुरद्विषाम्॥ भवायामरसिंहानाम

न

तिवीर्यबलान्विताः॥१२॥ब्रह्मेशगुहविष्णूनांतथेंद्रस्य
चशक्तयः॥शरीरेभ्योविनिष्क्रम्यतद्रूपैश्चंडिकांययुः॥
१३॥यस्यदेवस्ययद्रूपंयथाभूषणवाहनम्॥तद्वदेवहि
तच्छक्तिरसुरान्योद्धुमाययौ॥१४॥हंसयुक्तविमाना
ग्रेसाक्षसूत्रकमंडलुः॥आयाताब्रह्मणःशक्तिर्ब्रह्मा
णीत्यभिधीयते॥१५॥माहेश्वरीवृषारूढात्रिशूलवर
धारिणी॥महाहिवलयाप्राप्ताचंद्ररेखाविभूषणा॥१६
कौमारीशक्तिहस्ताचमयूरवरवाहना॥योद्धुमभ्याययौ
दैत्यानंबिकागुहरूपिणी॥१७॥तथैववैष्णवीशक्तिर्ग

सा

रूढोपरिसंस्थिता ॥ शंखचक्रगदाशार्ङ्गखड्गहस्ताभ्यु
पाययौ ॥ १८ ॥ यज्ञवाराहमतुलंरूपंयाबिभ्रतोहरेः ॥ श
क्तिःसाप्याययौतत्रवाराहींबिभ्रतींतनुम् ॥ १९ ॥ नारसिं
हीनृसिंहस्यबिभ्रतीसदृशंवपुः ॥ प्राप्तातत्रसटाक्षेप
क्षिप्तनक्षत्रसंहतिः ॥ २० ॥ वज्रहस्तातथैवेंद्रीगजराजो
परिस्थिता ॥ प्राप्तासहस्रनयनायथाशक्रस्तथैवसा ॥
२१ ॥ ततःपरिवृतास्ताभिरीशानोदेवशक्तिभिः ॥ हन्य
तामसुराःशीघ्रंममप्रीत्याहचंडिकाम् ॥ २२ ॥ ततोदेवी
शरीरात्तुविनिष्क्रांतातिभीषणा ॥ चंडिकाशक्तिरत्युग्रा

स. शिवाशतनिनादिनी ॥२३॥ साचाह धूम्रजटिलमीशान अ.
५५ मपराजिता ॥ दूतत्वंगच्छभगवन्पार्श्वंशुंभनिशुंभयोः ८
॥२४॥ ब्रूहिशुंभंनिशुंभंचदानवावतिगर्वितौ ॥ येचान्ये
दानवास्तत्रयुद्धायसमुपस्थिताः ॥२५॥ त्रैलोक्यमिंद्रो
लभतांदेवाःसंतुहविर्भुजः ॥ यूयंप्रयातपातालंयदिजी
वितुमिच्छथ ॥२६॥ बलावलेपादथचेद्भवंतोयुद्धकांक्षि
णः ॥ तदागच्छततृप्यंतुमच्छिवाःपिशितेनवः ॥२७॥
५ ततोनियुक्तोदौत्येनतयादेव्याशिवःस्वयम् ॥ शिवदूती ५५
तिलोकेस्मिंस्ततःसाख्यातिमागता ॥२८॥ तेपिश्रुत्वाव

चोदेव्याःशर्वाख्यातंमहासुराः॥अमर्षापूरिताजग्मु
र्यत्रकात्यायनीस्थिता॥२९॥ततःप्रथममेवाग्रेशरश
त्त्यृष्टिवृष्टिभिः॥ ववर्षुरुद्धतामर्षास्तांदेवीममरारयः
॥३०॥साचतान्प्रहितान्बाणांच्छूलचक्रपरश्वधान्॥
चिच्छेदलीलयाध्मातधनुर्मुक्तैर्महेषुभिः॥३१॥तस्या
ग्रतस्तथाकालीशूलपातविदारितान्॥ खट्वांगपो
थितांश्चारीन्कुर्वतीव्यचरत्तदा॥३२॥कमंडलुजला
क्षेपहतवीर्यान्हतौजसः॥ब्रह्माणीचाकरोच्छत्रून्ये
नयेनस्मधावति॥३३॥माहेश्वरीत्रिशूलेनतथाचक्रे

णवैष्णवी॥ दैत्यान्जघानकौमारीतथाशक्त्यातिकोप
ना॥३४॥ ऐंद्रीकुलिशपातेनशतशोदैत्यदानवाः॥पेतु
र्विदारिताःपृथ्व्यांरुधिरौघप्रवर्षिणः॥३५॥तुंडप्रहा
रविध्वस्तादंष्ट्राग्रक्षतवक्षसः॥वराहमूर्त्यान्यपतंश्च
क्रेणचविदारिताः॥३६॥नखैर्विदारितांश्चान्यान्भ
क्षयंतीमहासुरान्॥नारसिंहीचचाराजौनादापूर्णदि
गंबरा॥३७॥चंडाट्टहासैरसुराःशिवदूत्यभिदूषिताः
पेतुःपृथिव्यांपतितांस्तांश्चखादाथसातदा॥३८॥इ
तिमातृगणंक्रुद्धंमर्दयंतंमहासुरान्॥दृष्ट्वाभ्युपायै

विविधैर्नेशुर्देवारिसैनिकाः ॥ ३९ ॥ पलायनपरान्दृष्ट्वा
दैत्यान्मातृगणार्दितान् ॥ योद्धुमभ्याययौक्रुद्धोरक्तबी
जोमहासुरः ॥ ४० ॥ रक्तबिंदुर्यदाभूमौपतत्यस्यशरी
रतः ॥ समुत्पततिमेदिन्यांतत्प्रमाणस्तदासुरः ॥ ४१ ॥
युयुधेसगदापाणिरिंद्रशक्त्यामहासुरः ॥ ततश्चैंद्री
स्ववज्रेणरक्तबीजमताडयत् ॥ ४२ ॥ कुलिशेनाहतस्या
शुतस्यसुस्रावशोणितम् ॥ समुत्तस्थुस्ततोयोधा-
स्तद्रूपास्तत्पराक्रमाः ॥ ४३ ॥ यावंतःपतितास्तस्यश
रीराद्रक्तबिंदवः ॥ तावंतःपुरुषाजातास्तद्वीर्यबलवि

स. क्रमाः॥४४॥तेपिचायुयुधुस्तत्रपुरुषारक्तसंभवाः अ.
५७ ॥समंमातृभिरत्युग्रशस्त्रपातातिभीषणम्॥४५॥ ८
पुनश्चवज्रपातेनक्षतमस्यशिरोयदा॥ववाहरक्तंपु
रुषास्ततोजाताःसहस्रशः॥४६॥वैष्णवीसमरेचैनं
चक्रेणाभिजघानह॥गदयाताडयामासऐंद्रीतमसु
रेश्वरम्॥४७॥वैष्णवीचक्रभिन्नस्यरुधिरस्रावसं
भवैः॥सहस्रशोजगद्व्याप्तंतत्प्रमाणैर्महासुरैः॥४८
शक्त्याजघानकौमारीवाराहीचतथासिना॥माहेश्व ५७
रीत्रिशूलेनरक्तबीजंमहासुरम्॥४९॥सचापिगदया

दैत्यःसर्वाएवाहनत्पृथक् ॥ मातृःकोपसमाविष्टोरक्त
बीजोमहासुरः ॥ ५० ॥ तस्याहतस्यबहुधारक्तशूलादि
भिर्भुवि ॥ पपातयोवैरक्तौघस्तेनासन्शतशोसुराः ॥
५१ ॥ तैश्चासुरासृक्संभूतैरसुरैःसकलंजगत् ॥ व्याप्त
मासीत्ततोदेवाभयमाजग्मुरुत्तमम् ॥ ५२ ॥ तान्विष
ण्णान्सुरान्दृष्ट्वाचंडिकाप्राहसत्वरम् ॥ उवाचका
लींचामुंडेविस्तीर्णंवदनंकुरु ॥ ५३ ॥ मच्छस्त्रपातसं
भूतान्रक्तबिंदून्महासुरान् ॥ रक्तबिंदोःप्रतीच्छत्वं
वक्त्रेणानेनवेगिना ॥ ५४ ॥ भक्षयंतीचररणेतदुत्पन्ना

स. न्महासुरान् ॥ एवमेषक्षयंदैत्यःक्षीणरक्तोगमिष्य- अ.
५८ ति ॥ ५५ ॥ भक्ष्यमाणास्त्वयाचोग्रानचोत्पत्स्यंचापरे ८
॥ इत्युक्त्वातांततोदेवीशूलेनाभिजघानतम् ॥ ५६ ॥ मु
पत्रा खेनकालीजगृहेरक्तबीजस्यशोणितम् ॥ ततोसावा
जघानाथगदयातत्रचंडिकाम् ॥ ५७ ॥ नचास्यावेदनां
चक्रेगदापातोल्पिकामपि ॥ तस्याहतस्यदेहात्तुबहु
सुस्रावशोणितम् ॥ ५८ ॥ यतस्ततस्तद्वक्त्रेणचामुंडा
संप्रतीच्छति ॥ मुखेसमुद्गतायेस्यारक्तपातान्महासु ५८
राः ॥ ५९ ॥ तांश्चखादाथचामुंडापपौतस्यचशोणितम्

देवीशूलेनवज्रेणबाणैरसिभिर्ऋष्टिभिः॥ ६० ॥जघा
नरक्तबीजंतंचामुंडापीतशोणितम्॥ सपपातमहीए
ष्ठेशस्त्रसंघसमाहतः॥ ६१ ॥नीरक्तश्चमहीपालरक्त
बीजोमहासुरः॥ ततस्तेहर्षमतुलमवापुस्त्रिदशानृप
॥ ६२ ॥ तेषांमातृगणोजातोननर्त्तासृङ्मदोद्धतः॥ ६३
॥ ॥ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवी
भगवतीमाहात्म्येरक्तबीजवधोनामाष्टमोऽध्यायः ८
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ॥ राजोवाच ॥ १ ॥ विचित्रमिदमाख्यातं भगव
न्भवता मम ॥ देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रित
म् ॥ २ ॥ भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते ॥ च
कार शुंभो यत्कर्म निशुंभश्चातिकोपनः ॥ ३ ॥ ॥ ऋषि
रुवाच ॥ ४ ॥ चकार कोपमतुलं रक्तबीजे निपातिते ॥ शुं
भासुरो निशुंभश्च हतेष्वन्येषु चाहवे ॥ ५ ॥ हन्यमानं म
हासैन्यं विलोक्यामर्षमुद्वहन् ॥ अभ्यधावन्निशुंभोथ
मुख्ययासुरसेनया ॥ ६ ॥ तस्याग्रतस्तथा पृष्ठे पार्श्वयो
श्च महासुराः ॥ संदष्टौष्ठपुटाः क्रुद्धा हंतुं देवीमुपाययुः

स. ॥७॥ आजगाममहावीर्यःशुंभोपिस्वबलैर्वृतः॥ निहंतुं अ.
६० चंडिकाकोपात्कृत्वायुद्धंतुमातृभिः॥८॥ ततोयुद्धमती ९
वासीद्देव्याःशुंभनिशुंभयोः॥ शरवर्षमतीवोग्रंमेघयो
रिववर्षतोः॥९॥ चिच्छेदास्तांछरांस्ताभ्यांचंडिकास्व
शरोत्करैः॥ ताडयामासचांगेषुशस्त्रौघैरसुरेश्वरौ॥
१०॥ निशुंभोनिशितंखड्गंचर्मचादायसुप्रभम्॥ अता
डयन्मूर्ध्निसिंहंदेव्यावाहनमुत्तमम्॥११॥ ताडितेवाह
नेदेवीक्षुरप्रेणासिमुत्तमम्॥ निशुंभस्याशुचिच्छेदच ६०
र्मचाप्यष्टचंद्रकम्॥१२॥ छिन्नेचर्मणिखड्गेचशक्तिंचि

क्षेपसोस्फुरः॥ तामप्यस्यद्द्विधा चक्रे चक्रेणाभिमुखाग
ताम्॥१३॥ कोपाध्मातोनिशुंभोथशूलंजग्राहदानवः॥
आयांतंमुष्टिपातेनदेवीतच्चाप्यचूर्णयत्॥१४॥ आवि
ध्याथगदांसोपिचिक्षेपचंडिकांप्रति॥ सापिदेव्यात्रि
शूलेनभिन्नाभस्मत्वमागता॥१५॥ ततःपरशुहस्तंत
मायांतंदैत्यपुंगवम्॥ आहत्यदेवीबाणौघैरपातयतभू
तले॥१६॥ तस्मिन्निपतितेभूमौनिशुंभेभीमविक्रमे॥
भ्रातर्यतीवसंक्रुद्धःप्रययौहंतुमंबिकाम्॥१७॥ सरथ
स्थस्तथात्युच्चैर्गृहीतपरमायुधैः॥ भुजैरष्टाभिरतुलै-

स. व्याप्ताशेषंबभौनभः॥१८॥तमायांतंसमालोक्यदेवी अ.
६१ शंखमवादयत्॥ज्याशब्दंचापिधनुषश्चकारातीवदुः ८
सहम्॥१९॥पूरयामासककुभोनिजघंटास्वनेनच॥स
मस्तदैत्यसैन्यानांतेजोवधविधायिना॥२०॥ततःसिंहो
महानादैस्त्याजितेभमहामदैः॥पूरयामासगगनंगांत
थैवदिशोदश॥२१॥ततःकालीसमुत्पत्यगगनंक्ष्माम
ताडयत्॥कराभ्यांतन्निनादेनप्राक्स्वनास्तेतिरोहिताः
॥२२॥अट्टाट्टहासमशिवंशिवदूतीचकारह॥तैःशब्दै ६१
रसुरास्त्रेसुःशुंभःकोपंपरंययौ॥२३॥दुरात्मंस्तिष्ठति

ष्ठेति व्याजहारांबिकायदा ॥ तदाजयेत्यभिहितंदेवैरा
काशसंस्थितैः ॥२४॥ शुंभेनागत्ययाशक्तिर्मुक्ताज्वा
लातिभीषणा ॥ आयांतीवह्निकूटाभासानिरस्तामहो
ल्कया ॥२५॥ सिंहनादेनशुंभस्यव्याप्तंलोकत्रयांतरम्
॥ निर्घातनिस्वनोघोरोजितवानवनीपते ॥२६॥ शुंभमु
क्तांछरान्देवीशुंभस्तत्प्रहितांछरान् ॥ चिच्छेदस्वशरै
रुग्रैःशतशोथसहस्रशः ॥२७॥ ततःसाचंडिकाक्रुद्धा
शूलेनाभिजघानतम् ॥ सतदाभिहतोभूमौमूर्छितोनि
पपातह ॥२८॥ ततोनिशुंभःसंप्राप्यचेतनामात्तकार्मु-

स. कः ॥ आजघानशरैर्देवींकालींकेसरिणंतथा ॥ २९ ॥ पु अ.
६२ नश्चकृत्वाबाहूनामयुतंदनुजेश्वरः ॥ चक्रायुतेनदिति ९
जश्छादयामासचंडिकाम् ॥ ३० ॥ ततोभगवतीक्रुद्धादु
र्गादुर्गार्तिनाशिनी ॥ चिच्छेदतानिचक्राणिस्वशरैःसा
यकांश्चतान् ॥ ३१ ॥ ततोनिशुंभोवेगेनगदामादायचंडि
काम् ॥ अभ्यधावतवैहंतुंदैत्यसैन्यसमावृतः ॥ ३२ ॥ त
स्यापततएवाशुगदांचिच्छेदचंडिका ॥ खड्गेनशितधा
रेणसचशूलंसमाददे ॥ ३३ ॥ शूलहस्तंसमायांतंनिशुं ६२
भममरार्दनम् ॥ हृदिविव्याधशूलेनवेगाविद्धेनचंडिका

॥३४॥ भिन्नस्यतस्यशूलेनहृदयान्निःसृतोपरः॥ महा
बलोमहावीर्यस्तिष्ठेतिपुरुषोवदन्॥३५॥ तस्यनि-
ष्क्रामतोदेवीप्रहस्यस्वनवत्ततः॥ शिरश्चिच्छेदखड्गे
नततोसावपतद्भुवि॥३६॥ ततःसिंहश्चखादोग्रदंष्ट्रा
क्षुण्णशिरोधरान्॥ असुरांस्तांस्तथाकालीशिवदू
तीतथापरान्॥३७॥ कौमारीशक्तिनिर्भिन्नाःकेचि
न्नेशुर्महासुराः॥ ब्रह्माणीमंत्रपूतेनतोयेनान्येनिराकृ
ताः॥३८॥ माहेश्वरीत्रिशूलेनभिन्नाःपेतुस्तथापरे॥
वाराहीतुंडघातेनकेचिच्चूर्णीकृताभुवि॥३९॥ खंडंखं

स. डंचचक्रेणवैष्णव्यादानवाःकृताः॥ वज्रेणचैन्द्रीह- अ.
६३ स्ताग्रविमुक्तेनतथापरे॥४०॥ केचिद्विनेशुरसुराःके ९
चिन्नष्टामहाहवात्॥ भक्षिताश्चापरेकालीशिवदूती
मृगाधिपैः॥४१॥ ॥इतिश्रीमार्कंडेयपुराणेसाव
र्णिकेमन्वंतरेदेवीभगवतीमाहात्म्येनिशुंभवधोनाम
नवमोऽध्यायः॥९॥ ॥श्रीरस्तु॥ ॥
॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

६३

॥ ॥ ऋषिरुवाच ॥ १ ॥ निशुंभंनिहतंदृष्ट्वाभ्रातरं
प्राणसंमितम् ॥ हन्यमानंबलंचैवशुंभः क्रुद्धोब्रवीद्वचः
॥ २ ॥ बलावलेपदुष्टेत्वंमादुर्गेगर्वमावह ॥ अन्यासांबल
माश्रित्ययुद्ध्यसेयातिमानिनी ॥ ३ ॥ ॥ श्रीदेव्युवाच
॥ ४ ॥ एकैवाहंजगत्यत्रद्वितीयाकाममापरा ॥ पश्यैतादु
ष्टमय्येवविशंत्योमद्विभूतयः ॥ ५ ॥ ततः समस्तास्तादे
व्योब्रह्माणीप्रमुखालयम् ॥ तस्यादेव्यास्तनौजग्मुरेकै
वासीत्तदांबिका ॥ ६ ॥ ॥ श्रीदेव्युवाच ॥ ७ ॥ अहंवि
भूत्याबहुभिरिहरूपैर्यदास्थिता ॥ तत्संहृतंमयैकैव

तिष्ठाम्याजौस्थिरोभव ॥ ८ ॥ ॥ ऋषिरुवाच ॥ ९ ॥
ततः प्रववृतेयुद्धंदेव्याः शुंभस्यचोभयोः ॥ पश्यतांसर्व
देवानामसुराणांचदारुणम् ॥ १० ॥ शरवर्षैः शितैः श
स्त्रैस्तथास्त्रैश्चैवदारुणैः ॥ तयोर्युद्धमभूद्भूयः सर्वलोक
भयंकरम् ॥ ११ ॥ दिव्यान्यस्त्राणिशतशोमुमुचेयान्य
थांबिका ॥ बभंजतानिदैत्येंद्रस्तत्प्रतीघातकर्तृभिः ॥ १२
॥ मुक्तानितेनचास्त्राणिदिव्यानिपरमेश्वरी ॥ बभंज
लीलयैवोग्रहुंकारोच्चारणादिभिः ॥ १३ ॥ ततः शरश
तैर्देवीमाच्छादयतसोऽसुरः ॥ साऽपितत्कुपितादेवीध

स. नुश्चिच्छेदचेषुभिः॥१४॥छिन्नेधनुषिदैत्येंद्रस्तथाश अ.
६५ क्तिमुपाददे॥चिच्छेददेवीचक्रेणतामप्यस्यकरेस्थि १०
ताम्॥१५॥ततःखड्गमुपादायशतचंद्रंचभानुमत्॥
अभ्यधावत्तांदेवींदैत्यानामधिपेश्वरः॥१६॥तस्या
पततएवाशुखड्गंचिच्छेदचंडिका॥धनुर्मुक्तैःशितैर्बा
णैश्चर्मचार्ककरामलम्॥१७॥हताश्वःसतदादैत्यश्छि
न्नधन्वाविसारथिः॥जग्राहमुद्गरंघोरमंबिकानिधनो
द्यतः॥१८॥चिच्छेदापततस्तस्यमुद्गरंनिशितैःशरैः ६५
॥तथापिसोभ्यधावत्तांमुष्टिमुद्यम्यवेगवान्॥१९॥स

मुष्टिंपातयामासहृदयेदैत्यपुंगवः॥ देव्यास्तंचापिसा
देवीतलेनोरस्यताडयत्॥२०॥ तलप्रहाराभिहतोनिप
पातमहीतले॥ सदैत्यराजःसहसापुनरेवतथोत्थितः
॥२१॥ उत्पत्यचप्रगृह्योच्चैर्देवींगगनमास्थितः॥ तत्रा
पिसानिराधारायुयुधेतेनचंडिका॥२२॥ नियुद्धंखेतदा
दैत्यश्चंडिकाचपरस्परम्॥ चक्रतुःप्रथमंयुद्धंमुनिवि
स्मयकारकम्॥२३॥ ततोनियुद्धंसुचिरंकृत्वातेनां-
बिकासह॥ उत्पात्यभ्रामयामासचिक्षेपधरणीतले॥
२४॥ सक्षिप्तोधरणींप्राप्यमुष्टिमुद्यम्यवेगतः॥अभ्य

स॰ धावतदुष्टात्मा चंडिकानिधनेच्छया ॥ २५ ॥ तमायां अ॰
६६ तंततोदेवीसर्वदैत्यजनेश्वरम् ॥ जगत्यांपातयामास १०
भित्वाशूलेनवक्षसि ॥ २६ ॥ सगतासुःपपातोर्व्यांदे
वीशूलाग्रविक्षतः ॥ चालयन्सकलांपृथ्वींसाब्धिद्वी
पांसपर्वताम् ॥ २७ ॥ ततःप्रसन्नमखिलंहतेतस्मिन्
दुरात्मनि ॥ जगत्स्वास्थ्यमतीवापनिर्मलंचाभवन्न
भः ॥ २८ ॥ उत्पातमेघाःसोल्कायेप्रागासंस्तेशमंययुः
॥ सरितोमार्गवाहिन्यस्तथासंस्तत्रपातिते ॥ २९ ॥ त ६६
तोदेवगणाःसर्वेहर्षनिर्भरमानसाः ॥ बभूवुर्निहतेतेन

स्मिन्गंधर्वाललितंजगुः॥३०॥अवादयंस्तथैवान्ये
ननृतुश्चाप्सरोगणाः॥ववुःपुण्यास्तथावाताःसुप्र
भोभूद्दिवाकरः॥३१॥जज्वलुश्चाग्नयःशांताःशां
तादिग्जयिनःस्वनाः॥३२॥ ॥इतिश्रीमार्कंडे
यपुराणेसावर्णिकेमन्वंतरेदेवीभगवतीमाहात्म्येशुं
भवधोनामदशमोऽध्यायः॥१०॥ ॥शुभम्॥
॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

॥ ॥ऋषिरुवाच॥१॥देव्याहतेतत्रमहासुरेंद्रेसें
द्राःसुरावह्निपुरोगमास्ताम्॥कात्यायनींतुष्टुवुरिष्ट
लाभाद्विकाशिवक्त्रास्तुविकाशिताशाः॥२॥देविप्र
पन्नार्तिहरेप्रसीदप्रसीदमातर्जगतोखिलस्य॥प्रसी
दविश्वेश्वरिपाहिविश्वंत्वमीश्वरीदेविचराचरस्य॥३
आधारभूताजगतस्त्वमेकामहीस्वरूपेणयतःस्थिता
सि॥अपांस्वरूपस्थितयात्वयैतदाप्यायतेकृत्स्नम
लंघ्यवीर्ये॥४॥त्वंवैष्णवीशक्तिरनंतवीर्याविश्वस्य
बीजंपरमासिमाया॥संमोहितंदेविसमस्तमेतत्त्वंवैप्र

स. सन्नाभुविमुक्तिहेतुः॥५॥विद्याःसमस्तास्तवदेविभे अ.
६९ दाःस्त्रियःसमस्ताःसकलाजगत्सु॥त्वयैकयापूरितमं ११
बयैतत्कातेस्तुतिःस्तव्यपरापरोक्तिः॥६॥सर्वभूताय
दादेवीस्वर्गमुक्तिप्रदायिनी॥त्वंस्तुतास्तुतयेकावाभवं
तुपरमोक्तयः॥७॥सर्वस्यबुद्धिरूपेणजनस्यहृदिसं
स्थिते॥स्वर्गापवर्गदेदेविनारायणिनमोस्तुते॥८॥क
लाकाष्ठादिरूपेणपरिणामप्रदायिनि॥विश्वस्योपर
तौशक्तेनारा०॥९॥सर्वमंगलमांगल्येशिवेसर्वार्थसा ६९
धिके॥शरण्येत्र्यंबकेगौरिनारा०॥१०॥सृष्टिस्थिति

विनाशानांशक्तिभूतेसनातनि ॥ गुणाश्रयेगुणमयेना
रा० ॥ ११ ॥ शरणागतदीनार्त्तपरित्राणपरायणे ॥ सर्व
स्यार्त्तिहरेदेविनाय० ॥ १२ ॥ हंसयुक्तविमानस्थेब्रह्मा
णीरूपधारिणि ॥ कौशांभःक्षरिकेदेविनारा० ॥ १३ ॥
त्रिशूलचंद्राहिधरेमहावृषभवाहिनि ॥ माहेश्वरीस्वरू
पेणनारा० ॥ १४ ॥ मयूरकुक्कुटवृतेमहाशक्तिधरेऽनघे
॥ कौमारीरूपसंस्थानेनारा० ॥ १५ ॥ शंखचक्रगदाशा
र्ङ्गगृहीतपरमायुधे ॥ प्रसीदवैष्णवीरूपेनारा० ॥ १६ ॥
गृहीतोग्रमहाचक्रेदंष्ट्रोद्धृतवसुंधरे ॥ वराहरूपिणि

स. शिवेनारा०॥१७॥ नृसिंहरूपेणोग्रेणहंतुंदैत्यान्कृतो अ.
६९ द्यमे॥ त्रैलोक्यत्राणसहितेनारा०॥१८॥ किरीटिनिम ११
हावज्रेसहस्रनयनोज्ज्वले॥ वृत्रप्राणहरेचैंद्रिनारा०
॥१९॥ शिवदूतीस्वरूपेणहतदैत्यमहाबले॥ घोररूपे
महारावेनारा०॥२०॥ दंष्ट्राकरालवदनेशिरोमालावि
भूषणे॥ चामुंडेमुंडमथनेनारा०॥२१॥ लक्ष्मीलज्जेम
हाविद्येश्रद्धेपुष्टिस्वधेध्रुवे॥ महारात्रिमहामायेनारा०
॥२२॥ मेधेसरस्वतिवरेभूतिबाभ्रवितामसि॥ निय ६९
तेत्वंप्रसीदेशेनारा०॥२३॥ सर्वस्वरूपेसर्वेशेसर्वशक्ति

समन्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तुते ॥
२४ ॥ एतत्तेवदनंसौम्यंलोचनत्रयभूषितम् ॥ पातुनः
सर्वभूतेभ्यः कात्यायनिनमोस्तुते ॥ २५ ॥ ज्वालाकराल
मत्युग्रमशेषासुरसूदनम् ॥ त्रिशूलंपातुनोभीतेर्भद्र
कालिनमोस्तुते ॥ २६ ॥ हिनस्तिदैत्यतेजांसिस्वनेनापू
र्ययाजगत् ॥ साघंटापातुनोदेविपापेभ्योनःसुतानिव
॥ २७ ॥ असुरासृग्वसापंकचर्चितस्तेकरोज्वलः ॥ शु
भायखड्गोभवतुचंडिकेत्वांनतावयम् ॥ २८ ॥ रोगान
शेषानपहंसितुष्टारुष्टातुकामान्सकलानभीष्टान् ॥

स. त्वामाश्रितानांनविपन्नराणांत्वामाश्रिताह्याश्रयतांप्र अ.
७० यांति॥२९॥एतत्कृतंयत्कदनंत्वयाद्यधर्मद्विषांदेविम ११
हासुराणाम्॥रूपैरनेकैर्बहुधात्ममूर्त्तिंकृत्वांबिकेतत्
प्रकरोतिकान्या॥३०॥विद्यासुशास्त्रेषुविवेकदीपेष्वा
द्येषुवाक्येषुचकात्वदन्या॥ममत्वगर्त्तेतिमहांधकारे
विभ्रामयत्येतदतीवविश्वम्॥३१॥रक्षांसियत्रोग्रवि
षाश्चनागायत्रारयोदस्युबलानियत्र॥दावानलोयत्रत
थाब्धिमध्येतत्रस्थितात्वंपरिपासिविश्वम्॥३२॥वि ७०
श्वेश्वरीत्वंपरिपासिविश्वंविश्वात्मिकाधारयसीतिवि

श्वम् ॥ विश्वेशवंद्याभवतीभवंतिविश्वाश्रयायेत्वयिभ
क्तिनम्राः ॥३३॥ देविप्रसीदपरिपालयनोरिभीतेर्नित्यं
यथासुरवधादधुनैवसद्यः ॥ पापानिसर्वजगतांप्रश
मंनयाशुउत्पातपाकजनितांश्चमहोपसर्गान् ॥३४॥ प्र
णतानांप्रसीदत्वंदेविविश्वार्तिहारिणि ॥ त्रैलोक्यवा
सिनामीड्येलोकानांवरदाभव ॥३५॥ ॥ श्रीदेव्युवा
च ॥३६॥ वरदाहंसुरगणावरंयन्मनसेच्छथ ॥ तंवृणुध्वं
प्रयच्छामिजगतामुपकारकम् ॥३७॥ ॥ देवाऊचुः ३८
सर्वबाधाप्रशमनंत्रैलोक्यस्याखिलेश्वरि ॥ एवमेवत्व

याकार्यमस्माद्वैरिविनाशनम् ॥३९॥ ॥श्रीदेव्युवाच ॥
४०॥ वैवस्वतेंतरेप्राप्तेअष्टाविंशतिमेयुगे ॥ शुंभोनिशुं
भश्चैवान्यावुत्पत्स्येतेमहासुरौ ॥४१॥ नंदगोपगृहेजा
तायशोदागर्भसंभवा ॥ ततस्तौनाशयिष्यामिविंध्याच
लनिवासिनी ॥४२॥ पुनरप्यतिरौद्रेणरूपेणपृथिवीत
ले ॥ अवतीर्यहनिष्यामिवैप्रचित्तांस्तुदानवान् ॥४३॥
भक्षयंत्याश्चतानुग्रान्वैप्रचित्तान्महासुरान् ॥ रक्तादं
ताभविष्यंतिदाडिमीकुसुमोपमाः ॥४४॥ ततोमांदेवताः
स्वर्गेमर्त्यलोकेचमानवाः ॥ स्तुवंतोव्याहरिष्यंतिसततंर

क्तदंतिकाम् ॥ ४५ ॥ भूयश्चशतवार्षिक्यामनावृष्ट्यामनं
भसि ॥ मुनिभिःसंस्तुताभूमौसंभविष्याम्ययोनिजा ॥ ४६
ततःशतेननेत्राणांनिरीक्षिष्यामियन्मुनीन् ॥ कीर्तयिष्यं
तिमनुजाःशताक्षीमितिमांततः ॥ ४७ ॥ ततोहमखिलंलो
कमात्मदेहसमुद्भवैः ॥ भरिष्यामिसुराःशाकैरावृष्टेःप्राण
धारकैः ॥ ४८ ॥ शाकंभरीतिविख्यातिंतदायास्याम्यहंभु
वि ॥ तत्रैवचवधिष्यामिदुर्गमाख्यंमहासुरम् ॥ ४९ ॥ दुर्गादे
वीतिविख्यातंतन्मेनामभविष्यति ॥ पुनश्चाहंयदाभीमंरू
पंकृत्वाहिमाचले ॥ ५० ॥ रक्षांसिभक्षयिष्यामिमुनीनांत्रा

स. णकारणात् ॥ तदामांमुनयःसर्वेस्तोष्यंत्यानम्रमूर्तयः ॥ अ.
७२ ५१ ॥ भीमादेवीतिविख्यातंतन्मेनामभविष्यति ॥ यदारु ११
णाख्यस्त्रैलोक्येमहाबाधांकरिष्यति ॥ ५२ ॥ तदाहंभ्रामरं
रूपंकृत्वासंख्येयषट्पदम् ॥ त्रैलोक्यस्यहितार्थायवधि
ष्यामिमहासुरम् ॥ ५३ ॥ भ्रामरीतिचमांलोकास्तदास्तो
ष्यंतिसर्वतः ॥ इत्थंयदायदाबाधादानवोत्थाभविष्यति ॥
५४ ॥ तदातदावतीर्याहंकरिष्याम्यरिसंक्षयम् ॥ ५५ ॥
॥ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीभगव ७२
तीमाहात्म्येनारायणीस्तुतिर्नामएकादशोऽध्यायः ॥ ११ ॥

॥ ॥ श्रीदेव्युवाच ॥ १ ॥ एभिःस्तवैश्चमांनित्यंस्तोष्यते
यःसमाहितः॥ तस्याहंसकलांबाधांनाशयिष्याम्यसंशय
म्॥ २ ॥ मधुकैटभनाशंचमहिषासुरघातनम्॥ कीर्तयि
ष्यंतियेतद्वद्वधंशुंभनिशुंभयोः॥ ३ ॥ अष्टम्यांचचतुर्दश्यां
नवम्यांचैकचेतसः॥ श्रोष्यंतिचैवयेभक्त्यामममाहात्म्य
मुत्तमम्॥ ४ ॥ नतेषांदुष्कृतंकिंचिद्दुष्कृतोत्थानचापदः॥
भविष्यतिनदारिद्र्यंनचैवेष्टवियोजनम्॥ ५ ॥ शत्रुतो
नभयंतस्यदस्युतोवानराजतः॥ नशस्त्रानलतोयौघात्क
दाचित्संभविष्यति॥ ६ ॥ तस्मान्ममैतन्माहात्म्यंपठित

व्यंसमाहितैः॥श्रोतव्यंचसदाभक्त्यापरंस्वस्त्ययनंमह
त्॥७॥उपसर्गानशेषांस्तुमहामारीसमुद्भवान्॥तथात्रि
विधमुत्पातंमाहात्म्यंशमयेन्मम॥८॥यत्रैतत्पठ्यतेसम्य
ङ्नित्यमायतनेमम॥सदानतद्विमोक्ष्यामिसान्निध्यंतत्र
मेस्थितम्॥९॥बलिप्रदानेपूजायामग्निकार्येमहोत्सवे
॥सर्वंममैतच्चरितमुच्चार्यंश्राव्यमेववा॥१०॥जानताजा
नतावापिबलिपूजांतथाकृताम्॥प्रतीच्छिष्याम्यहंप्री
त्यावह्निहोमंतथाकृतम्॥११॥शरत्कालेमहापूजाक्रि
यतेयाचवार्षिकी॥तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिस

स.
७४

मन्वितः॥१२॥सर्वबाधाविनिर्मुक्तोधनधान्यसुतान्वितः॥
मनुष्योमत्प्रसादेनभविष्यतिनसंशयः॥१३॥श्रुत्वाममैत
न्माहात्म्यंतथाचोत्पत्तयःशुभाः॥पराक्रमंचयुद्धेषुजाय
तेनिर्भयःपुमान्॥१४॥रिपवःसंक्षयंयांतिकल्याणंचोप
पद्यते॥नंदतेचकुलंपुंसांमाहात्म्यंममशृण्वताम्॥१५॥
शांतिकर्मणिसर्वत्रतथादुःस्वप्नदर्शने॥ग्रहपीडासुचो
ग्रासुमाहात्म्यंशृणुयान्मम॥१६॥उपसर्गाःशमंयांतिग्र
हपीडाश्चदारुणाः॥दुःस्वप्नंचनृभिर्दृष्टंसुस्वप्नमुपजायते॥
१७॥बालग्रहाभिभूतानांबालानांशांतिकारकम्॥संघातभे

अ.
१२
७४

द्देवनृणां मैत्रीकरणमुत्तमम् ॥ १८ ॥ दुर्वृत्तानामशेषाणां ब
लहानिकरं परम् ॥ रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥
१९ ॥ सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ॥ पशुपुष्पा
र्घधूपैश्च गंधदीपैस्तथोत्तमैः ॥ २० ॥ विप्राणां भोजनैर्होमैः प्रो
क्षणीयैरहर्निशम् ॥ अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेणया
॥ २१ ॥ प्रीतिर्मे क्रियते सास्मिन्सकृदुच्चरिते श्रुते ॥ श्रुतं हर
ति पापानि तथारोग्यं प्रयच्छति ॥ २२ ॥ रक्षां करोति भूतेभ्यो ज
न्मनां कीर्तनं मम ॥ युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥ २३
॥ तस्मिन्श्रुते वैरिकृतं भयं पुंसां न जायते ॥ युष्माभिः स्तु

स. नयोयाश्चयाश्चब्रह्मर्षिभिःकृताः॥२४॥ब्रह्मणाचकृतास्ता अ.
७५ स्तुप्रयच्छंतिशुभांमतिम्॥अरण्येप्रांतरेवापिदावाग्निप १२
रिवारितः॥२५॥दस्युभिर्वावृतःशून्येगृहीतोवापिशत्रु
भिः॥सिंहव्याघ्रानुयातोवावनेवावनहस्तिभिः॥२६॥राज्ञा
क्रुद्धेनवाज्ञप्तोवध्योबंधगतोपिवा॥आघूर्णितोवावातेनस्थि
तःपोतेमहार्णवे॥२७॥पतत्सुचापिशस्त्रेषुसंग्रामेभृशदा
रुणे॥सर्वबाधासुघोरासुवेदनाभ्यर्दितोपिवा॥२८॥स्म
रन्ममैतच्चरितंनरोमुच्येतसंकटात्॥ममप्रभावात्सिंहाद्या ७५
दस्यवोवैरिणस्तथा॥२९॥दूरादेवपलायंतेस्मरतश्चरितंम

म॥३०॥ ॥ऋषिरुवाच॥३१॥इत्युक्त्वासाभगवतीचं
डिकाचंडविक्रमा॥३२॥पश्यतामेवदेवानांतत्रैवांतरधीय
त॥तेपिदेवानिरातंकाःस्वाधिकारान्यथापुरा ३३ यज्ञभाग
भुजःसर्वेचक्रुर्विनिहतारयः॥दैत्याश्चदेव्यानिहतेशुंभेदे
वरिपौयुधि॥३४॥जगद्विध्वंसिनितस्मिन्महोग्रेतुलविक्र
मे॥निशुंभेचमहावीर्येशेषाःपातालमाययुः॥३५॥एवंभ
गवतीदेवीसानित्यापिपुनःपुनः॥संभूयकुरुतेभूपजगतः
परिपालनम्॥३६॥तयैतन्मोह्यतेविश्वंसैवविश्वंप्रसूयते
॥सायाचितान्चविज्ञानंतुष्टाऋद्धिंप्रयच्छति॥३७॥व्याप्तंत

स. येतत्सकलंब्रह्मांडंमनुजेश्वर॥महाकाल्यामहाकालेमहा अ.
७६ मारीस्वरूपया॥३८॥सैवकालेमहामारीसैवसृष्टिर्भवत्य १२
जा॥स्थितिंकरोतिभूतानांसैवकालेसनातनी॥३९॥भव
कालेनृणांसैवलक्ष्मीर्वृद्धिप्रदागृहे॥सैवाभावेतथालक्ष्मी
र्विनाशायोपजायते॥४०॥स्तुतासंपूजितापुष्पैर्धूपगंधा
दिभिस्तथा॥ददातिवित्तंपुत्रांश्चमतिंधर्मेतथाशुभाम्
॥४१॥ ॥इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरे
देवीभगवतीमाहात्म्येभगवतीवाक्यंनामद्वादशोध्यायः ७६
॥१२॥ ॥श्रीरस्तु॥ ॥छ॥ ॥छ॥ ॥छ॥

स. ॥ ॥ऋषिरुवाच॥१॥एतत्तेकथितंभूपदेवीमाहात्म्य अ.
७७ मुत्तमम्॥एवंप्रभावासादेवीययेदंधार्यतेजगत्॥२॥विद्या १३
तथैवक्रियतेभगवद्विष्णुमायया॥तयात्वमेषवैश्यश्चतथै
वान्येविवेकिनः॥३॥मोह्यंतेमोहिताश्चैवमोहमेष्यंतिचा
परे॥तामुपैहिमहाराजशरणंपरमेश्वरीम्॥४॥आराधि
तासैवनृणांभोगस्वर्गापवर्गदा॥५॥ ॥मार्कंडेयउवाच
॥६॥इतितस्यवचःश्रुत्वासुरथःसनराधिपः॥७॥प्रणि
पत्यमहाभागंतमृषिंसंशितव्रतम्॥निर्विण्णोतिममत्वे ७७
नराज्यापहरणेनच॥८॥जगामसद्यस्तपसेसचवैश्यो

महामुने ॥ संदर्शनार्थमंबायानदीपुलिनमास्थितः ॥ ९ ॥ स
चवैश्यस्तपस्तेपेदेवीसूक्तंपरंजपन् ॥ तौतस्मिन्पुलिनेदे-
व्याः कृत्वामूर्तिंमहीमयीम् ॥ १० ॥ अर्हणांचक्रतुस्तस्याः पु
ष्पधूपाग्नितर्पणैः ॥ निराहारौयतात्मानौतन्मनस्कौसमा
हितौ ॥ ११ ॥ ददतुस्तौबलिंचैवनिजगात्रासृगुक्षितम् ॥ ए
वंसमाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥ १२ ॥ परितुष्टाजग
द्धात्रीप्रत्यक्षंप्राहचंडिका ॥ १३ ॥ ॥ श्रीदेव्युवाच ॥ १४ ॥
यत्प्रार्थ्यतेत्वयाभूपत्वयाचकुलनंदन ॥ मत्तस्तत्प्राप्यतांस
र्वंपरितुष्टाददामितत् ॥ १५ ॥ ॥ मार्कंडेयउवाच ॥ १६ ॥ ततो

 वव्रेनृपोराज्यमविभ्रंश्यन्यजन्मनि॥अत्रैवचनिजंराज्यंह 
 तशत्रुबलंबलात्॥१७॥सोपिवैश्यस्ततोज्ञानंवव्रेनिर्विण्ण 
मानसः॥ममेत्यहमितिप्राज्ञःसंगविच्युतिकारकम्॥१८॥
॥श्रीदेव्युवाच॥१९॥स्वल्पैरहोभिर्नृपतेस्वंराज्यंप्राप्स्यते
भवान्॥२०॥हत्वारिपूनस्खलितंतवतत्रभविष्यति॥२१॥
मृतश्चभूयःसंप्राप्यजन्मदेवाद्विवस्वतः॥२२॥सावर्णिकोना
ममनुर्भवान्भुविभविष्यति॥२३॥वैश्यवर्यत्वयायश्चवरो
स्मत्तोभिवांछितः॥२४॥तंप्रयच्छामिसंसिद्ध्यैतवज्ञानंभ 
विष्यति॥२५॥ ॥मार्कंडेयउवाच॥२६॥इतिदत्वातयो

देवीयथाभिलषितंवरम् ॥ बभूवांतर्हितासद्योभक्त्याता
भ्यामभिष्टुता ॥ २७ ॥ एवंदेव्यावरंलब्ध्वासुरथः क्षत्रिय
र्षभः ॥ सूर्याज्जन्मसमासाद्यसावर्णिर्भवितामनुः ॥ २८ ॥
एवंदेव्या० ॥ सूर्याज्जन्म० ॥ २९ ॥ ॥ इतिश्रीमार्कं० साव०
देवी० सुरथवैश्ययोर्वरप्रदानंनामत्रयोदशोऽध्यायः ॥ १३
॥ ॥ अंतेखड्गिनीत्यादिभिःषडंगंविधायदेवीसूक्तंप
ठित्वानवार्णवंप्रजप्यांतेषडंगंकृत्वामानसोपचारैःसंपू
ज्यकृतजपंदेव्यैनिवेद्यांतेरहस्यमंत्रंपठेत् ॥ ॥ छ ॥ ॥
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

तइवप्रवाम्यारभमाणाभुवनानिविश्वा ।। परोदिवापरएना पृथिव्यैतावतीमहिनासंबभूव ।। २। देवीसूक्तंसमाप्तं

स. ॥ ॥राजोवाच॥ ॥भगवन्नवतारामेचंडिकायास्त्व अ.
८० योदिताः॥एतेषांप्रकृतिंब्रह्मन्प्रधानंवक्तुमर्हसि॥१॥ १४
आराध्यंयन्मयादेव्याःस्वरूपंयेनवाद्विज॥विधिनाब्रूहि
सकलंयथावत्प्रणतस्यमे॥२॥ ॥ऋषिरुवाच॥ ॥
इदंरहस्यंपरममनाख्येयंप्रचक्षते॥भक्तोसीतिनमेकिं
चित्तवावाच्यंनराधिप॥३॥सर्वस्याद्यामहालक्ष्मीस्त्रि
गुणापरमेश्वरी॥लक्ष्यालक्ष्यस्वरूपासाव्याप्यकृत्स्नंव्य
वस्थिता॥४॥मातुलिंगंगदांखेटंपानपात्रंचबिभ्रती॥ ८०
नागंलिंगंचयोनिंचबिभ्रतीनृपमूर्द्धनि॥५॥तप्तकांच

नवर्णाभातसकांचनभूषणा ॥ शून्यंतदखिलंस्वेनपूर
यामासतेजसा ॥ ६ ॥ शून्यंतदखिलंलोकंविलोक्यपरमे
श्वरी ॥ बभाररूपमपरंतमसाकेवलेनहि ॥ ७ ॥ साभिन्नां
जनसंकाशादंष्ट्रांकितवरानना ॥ विशाललोचनानारी
बभूवतनुमध्यमा ॥ ८ ॥ खड्गपात्रशिरःखेटैरलंकृतच
तुर्भुजा ॥ कबंधहारंशिरसाबिभ्राणाहिशिरःस्रजम् ९
सांप्रोवाचमहालक्ष्मींतामसीप्रमदोत्तमा ॥ नामकर्मच
मेमातर्देहितुभ्यंनमोनमः ॥ १० ॥ तांप्रोवाचमहालक्ष्मी
स्तामसींप्रमदोत्तमाम् ॥ ददामितवनामानियानिकर्मा

स. णितानिते ॥ ११ ॥ महामायामहाकालीमहामारीक्षुधातृ अ.
८१ षा ॥ निद्रातृष्णाचैकवीराकालरात्रिर्दुरत्यया ॥ १२ ॥ इमा १४
नितवनामानिप्रतिपाद्यानिकर्मभिः ॥ एभिःकर्माणिते
ज्ञात्वायोधीतेसोश्नुतेसुखम् ॥ १३ ॥ तामित्युक्त्वामहा
लक्ष्मीःस्वरूपमपरंनृप ॥ सत्वाख्येनातिशुद्धेनगुणेनें
दुप्रभंदधौ ॥ १४ ॥ अक्षमालांकुशधरावीणापुस्तकधा
रिणी ॥ साबभूववरानारीनामान्यस्यैवसाददौ ॥ १५ ॥
महाविद्यामहावाणीभारतीवाक्सरस्वती ॥ आर्याब्रा ८१
ह्मीकामधेनुर्वेदगर्भाचधीश्वरी ॥ १६ ॥ अथोवाचमहाल

श्रीर्महाकालींसरस्वतीम् ॥ युवांजनयतांदेव्यौमिथुने-
स्वानुरूपतः॥१७॥ इत्युक्त्वातेमहालक्ष्मीः ससर्जमिथुनं
स्वयम् ॥ हिरण्यगर्भौरुचिरौस्त्रीपुंसौकमलासनौ ॥ १८
ब्रह्मन्विधेविरिंचेतिधातरित्याहतंनृप ॥ श्रीःपद्मेकम
लेलक्ष्मीत्याहमातास्त्रियंचताम् ॥ १९ ॥ महाकालीभार
तींचमिथुनेसृजतःसह ॥ एतयोरपिरूपाणिनामानिच
वदामिते ॥ २० ॥ नीलकंठंरक्तबाहुंश्वेतांगंचंद्रशेखरम्
॥ जनयामासपुरुषंमहाकालीसितांस्त्रियम् ॥ २१ ॥ स
रुद्रःशंकरःस्थाणुःकपर्दीचत्रिलोचनः॥ त्रयीविद्या

कामधेनुःसाध्वीभाषास्वराक्षरा ॥ २२ ॥ सरस्वतींस्त्रि
यंगौरींकृष्णांचपुरुषंनृप ॥ जनयामासनामानितयोरपि
वदामिते ॥ २३ ॥ विष्णुःकृष्णोहृषीकेशोवासुदेवोजना
र्दनः ॥ उमागौरीसतीचंडीसुंदरीसुभगाशिवा ॥ २४ ॥
एवंत्रिवृतयःसद्यःपुरुषत्वंप्रपेदिरे ॥ चक्षुष्मंतोनुपश्यं
तिनेतरेतद्विदोजनाः ॥ २५ ॥ ब्रह्मणेप्रददौपत्नींमहा
लक्ष्मीनृंपत्रयीम् ॥ रुद्रायगौरींवरदांवासुदेवायचश्रि
यम् ॥ २६ ॥ स्वरयासहसंभूयविरिंचोंडमजीजनत् ॥
बिभेदभगवान्रुद्रस्तद्गौर्यासहवीर्यवान् ॥ २७ ॥ अंड

मध्येप्रधानादिकार्यजातमभून्नृप ॥ महाभूतात्मकंसर्वं
जगत्स्थावरजंगमम् ॥ २८ ॥ पुपोषपालयामासतल्ल-
क्ष्म्यासहकेशवः ॥ महालक्ष्मीर्महाराजसर्वसत्वमयी
श्वरी ॥ २९ ॥ निराकाराचसाकारासैवनानाभिधानभृत्
॥ नामांतरैर्निरूप्यैषानाम्नानान्येनकेनचित् ॥ ३० ॥
॥ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीभग
वतीमाहात्म्येप्राधानिकंरहस्यंनामचतुर्दशोऽध्यायः ॥
॥ १४ ॥ ॥ श्रीरस्तु ॥ ॥ शुभंभवतु ॥ ॥
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ॥ऋषिरुवाच॥ ॥त्रिगुणातामसीदेवीसात्वि
कीयात्रिधोदिता॥ साशर्वाचंडिकादुर्गाभद्राभगवतीर्यते
१॥ योगनिद्राहरेरुक्तामहाकालीतमोगुणा॥ मधुकैट
भनाशार्थयांतुष्टावांबुजासनः॥२॥ दशवक्त्रादशभु
जादशपादांजनप्रभा॥ विशालयाराजमानात्रिंशल्लोच
नमालया॥३॥ स्फुरद्दशनदंष्ट्रासाभीमरूपापिभूमि
प॥ रूपसौभाग्यकांतीनांसाप्रतिष्ठामहाश्रियाम्॥४॥
खड्गबाणगदाशूलशंखचक्रभुशुंडिभृत्॥ परिघंका
र्मुकंशीर्षनिश्च्योतद्रुधिरंदधौ॥५॥ एषासावैष्णवीमा

स. यामहाकालीदुरत्यया ॥ आराधितावशीकुर्यात्पूजाक अ.
८४ र्तुश्चराचरम् ॥ ६ ॥ सर्वदेवशरीरेभ्योयाविर्भूतामितप्र १५
भा ॥ त्रिगुणासामहालक्ष्मीः साक्षान्महिषमर्दिनी ॥ ७
श्वेताननानीलभुजासुश्वेतस्तनमंडला ॥ रक्तमध्यार
क्तपादानीलजंघोरुरुन्मदा ॥ ८ ॥ सुचित्रजघनाचित्र
माल्यांबरविभूषणा ॥ चित्रानुलेपनाकांतिरूपसौभा
ग्यशालिनी ॥ ९ ॥ अष्टादशभुजापूज्यासासहस्रभुजा
सती ॥ आयुधान्यत्रवक्ष्यंतेदक्षिणाधःकरक्रमात् ॥ १० ८४
अक्षमालाचकमलंबाणोसिःकुलिशंगदा ॥ चक्रंत्रिशू

लंपरशुःशंखोघंटाचपाशकः॥ ११॥ शक्तिर्दंडश्चर्मचा
पंपानपात्रंकमंडलुः॥अलंकृतभुजामेभिरायुधैःकम
लासनाम्॥ १२॥ सर्वदेवमयीमीशांमहालक्ष्मीमिमांनृ
प॥ पूजयेत्सर्वलोकानांसदेवानांप्रभुर्भवेत्॥ १३॥ गौ
रीदेहात्समुद्भूतायासत्वैकगुणाश्रया॥ साक्षात्सरस्वती
प्रोक्ताशुंभासुरनिबर्हिणी॥ १४॥ दधौचाष्टभुजाबाण
मुसलेशूलचक्रभृत्॥ शंखंघंटांलांगलंचकार्मुकंवसु
धाधिप॥ १५॥ एषासंपूजिताभक्त्यासर्वज्ञत्वंप्रयच्छ
ति॥ निशुंभमथनीदेवीशुंभासुरनिबर्हिणी॥ १६॥ इ

स. सूक्तानिस्वरूपाणिमूर्तीनांतवपार्थिव ॥ उपासनंजग अ.
८५ न्मातुःपृथगासांनिशामय ॥ १७ ॥ महालक्ष्मीर्यदापूज्या १५
महाकालीसरस्वती ॥ दक्षिणोत्तरयोःपूज्येपृष्ठतोमिथु
नत्रयम् ॥ १८ ॥ विरिंचिःस्वरयामध्येरुद्रोगौर्याचदक्षिणे
॥ वामेलक्ष्म्याहृषीकेशःपुरतोदेवतात्रयम् ॥ १९ ॥ अष्टा
दशभुजामध्येवामेचास्यादशानना ॥ दक्षिणेष्टभुजाल
क्ष्मीर्महतीतिसमर्चयेत् ॥ २० ॥ अष्टादशभुजाचैषायदा
पूज्यानराधिप ॥ दशाननाचाष्टभुजादक्षिणोत्तरयोस्त ८५
दा ॥ २१ ॥ कालमृत्यूचसंपूज्यौसर्वारिष्टप्रशांतये ॥ यदा

चाष्टभुजापूज्याशुंभासुरनिर्बार्हिणी ॥ २२ ॥ नवास्याः
शक्तयः पूज्यास्तथारुद्रविनायकौ ॥ नमोदेव्याइतिस्तो
त्रैर्महालक्ष्मींसमर्चयेत् ॥ २३ ॥ अवतारत्रयार्चायांस्तो
त्रमंत्रास्तदाश्रयाः ॥ अष्टादशभुजाचैषापूज्यामहिष-
मर्दिनी ॥ २४ ॥ महालक्ष्मीर्महाकालीसैवप्रोक्तासरस्व
ती ॥ ईश्वरीपुण्यपापानांसर्वलोकमहेश्वरी ॥ २५ ॥ म-
हिषांतकरीयेनपूजितासजगत्प्रभुः ॥ पूजयेज्जगतांधा
त्रींचंडिकांभक्तवत्सलाम् ॥ २६ ॥ अर्घ्यादिभिरलंकारै
र्गंधपुष्पैस्तथाक्षतैः ॥ धूपैर्दीपैश्चनैवेद्यैर्नानाभक्ष्यसम

स. न्वितैः॥२७॥ रुधिराक्तेनबलिनामांसेनस्कुरयानृप॥ अ.
८६ प्रणामाचमनीयेनचंदनेनसुगंधिना॥२८॥ सकर्पूरै १५
श्चतांबूलैर्भक्तिभावसमन्वितैः॥ वामभागेग्रतोदेव्या
श्छिन्नशीर्षंमहासुरम्॥२९॥ पूजयेन्महिषंयेनप्रा
प्तंसायुज्यमीशया॥ दक्षिणेपुरतःसिंहंसमग्रंधर्ममी
श्वरम्॥३०॥ वाहनंपूजयेद्देव्याधृतंयेनचराचरम्॥
ततःकृतांजलिपुटस्तुवीतचरितैरिमैः॥३१॥ एकेन
वामध्यमेननैकेनेतरयोरिह॥ चरितार्द्धंतुनजपेज्जप ८६
न्छिद्रमवाप्नुयात्॥३२॥ स्तोत्रमंत्रैस्तुवीतेमांयदिवा

जगदंबिकाम् ॥ प्रदक्षिणानमस्कारानृकृत्वामूर्ध्निकृ
तांजलिः ॥ ३३ ॥ क्षमापयेज्जगद्धात्रींमुहुर्मुहुरतंद्रितः
॥ प्रतिश्लोकंतुजुहुयात्पायसंतिलसर्पिषा ॥ ३४ ॥ जु
हुयात्स्तोत्रमंत्रैर्वाचंडिकायैशुभंहविः ॥ नमोनमःपदै
र्देवींपूजयेत्सुसमाहितः ॥ ३५ ॥ प्रयतः प्रांजलिः प्र
ह्वः प्रणम्यारोप्यचात्मनि ॥ सुचिरंभावयेद्देवींचंडि-
कांतन्मयोभवेत् ॥ ३६ ॥ एवंयःपूजयेद्भक्त्याप्रत्यहंप
रमेश्वरीम् ॥ भुक्त्वाभोगान्यथाकामंदेवीसायुज्यमा
प्नुयात् ॥ ३७ ॥ योनपूजयतेनित्यंचंडिकांभक्तवत्सलाम्

स. ८७

॥ भस्मीकृत्यास्यपुण्यानिनिर्दहेत्परमेश्वरी ॥ ३८ ॥ अ.
तस्मात्पूजयभूपालसर्वलोकमहेश्वरीम् ॥ यथोक्तेन १५
विधानेनचंडिकांसुखमाप्स्यसि ॥ ३९ ॥ ॥ इतिश्री
मार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीभगवतीमाहात्म्ये
वैकृतिकरहस्यंनामपंचदशोऽध्यायः ॥ १५ ॥ ॥
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

८७

॥ ॥ ऋषिरुवाच ॥ ॥ नंदाभगवतीनामयाभवि
ष्यतिनंदजा ॥ सास्तुतापूजिताभक्त्यावशीकुर्याज्जग
त्रयम् ॥ १ ॥ कनकोत्तमकांतिःसासुकांतिकनकांबरा
॥ देवीकनकदामाढ्याकनकोत्तमभूषणा ॥ २ ॥ कमलां
कुशपाशाब्जैरलंकृतचतुर्भुजा ॥ इंदिराकमलालक्ष्मीः
साश्रीरुक्मांबुजासना ॥ ३ ॥ यारक्तदंतिकानामदेवीप्रो
क्तामयानघ ॥ तस्याःस्वरूपंवक्ष्यामिशृणुसर्वभयापह
म् ॥ ४ ॥ रक्तांबरारक्तवर्णारक्तसर्वांगभूषणा ॥ रक्तती
क्ष्णनखारक्तदशनारक्तदंष्ट्रिका ॥ ५ ॥ पतिंनारीवानुर

क्त्यादेवीभक्तंभजेज्जनम् ॥ वसुधेवविशालासासुमेरु
युगलस्तनी ॥ ६ ॥ दीर्घौलंबावतिस्थूलौतावतीवमनोह
रौ ॥ कर्कशावतिकांतौतौसर्वानंदपयोनिधी ॥ ७ ॥ भक्ता
न्संपाययेद्देवीसर्वकामदुघौस्तनौ ॥ खड्गंपात्रंचमुसलं
लांगलंचबिभर्त्तिसा ॥ ८ ॥ आख्यातारक्तचामुंडादेवीयो
गेश्वरीतिच ॥ अनयाव्याप्तमखिलंजगत्स्थावरजंगमम्
॥ ९ ॥ इमांयःपूजयेद्भक्त्यासव्याप्नोतिचराचरम् ॥ अधी
तेयइमंनित्यंरक्तदंत्यावपुस्तवम् ॥ १० ॥ तंसापरिचरेद्दे
वीपतिंप्रियमिवांगना ॥ शाकंभरीनीलवर्णानीलोत्पल

विलोचना ॥ ११ ॥ गंभीरनाभिस्त्रिवलीविभूषिततनू-
दरी ॥ स्फुकर्कशसमोत्तुंगवृत्तपीनघनस्तनी ॥ १२ ॥ मु
ष्टिंशिलीमुखापूर्णंकमलंकमलालया ॥ पुष्पपल्लवमूला
दिफलाढ्यशाकसंचयम् ॥ १३ ॥ काम्यानंतरसैर्युक्तंक्षु
त्तृण्मृत्युभयापहम् ॥ कार्मुकंचस्फुरत्कांतिबिभ्रतीपर
मेश्वरी ॥ १४ ॥ शाकंभरीशताक्षीसासैवदुर्गाप्रकीर्त्तिता
॥ उमागौरीसतीचंडीकालिकासाचपार्वती ॥ १५ ॥ शाकं
भरींस्तुवन्ध्यायन्जपन्संपूजयन्नमन् ॥ अक्षय्यम-
श्नुतेशीघ्रमन्नपानादिकंफलम् ॥ १६ ॥ भीमापिनीलवर्णा

स. ९०

वदंष्ट्रादशनभास्करा ॥ विशाललोचनावृत्ततुंगपीनपयो अ. १६
धरा ॥ १७ ॥ चंद्रहासंचडमरुंशिरःपात्रंचबिभ्रती ॥ एक
वीराकालरात्रिःसैवोक्ताकामदास्तुता ॥ १८ ॥ तेजोमंड
लदुर्धर्षाश्यामरीचित्रकांतिभृत् ॥ चित्रभ्रमरपाणिःसा
महामारीतिगीयते ॥ १९ ॥ इत्येतामूर्तयोदेव्याव्याख्याता
वसुधाधिप ॥ जगन्मातुश्चंडिकायाःकीर्तिताःकामधेन
वः ॥ २० ॥ इदंरहस्यंपरमंनवाच्यंकस्यचित्त्वया ॥ व्या-
ख्यानंदिव्यमूर्तीनामधीष्वावहितःस्वयम् ॥ २१ ॥ देव्या ९०
ध्यानंतवाख्यातंगुह्याद्गुह्यतरंमहत् ॥ २२ ॥ ॥ इतिश्रीमा

र्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीभगवतीमाहात्म्येमू
र्तिरहस्यंनामषोडशोऽध्यायः॥१६॥ ॥समाप्तम्॥
श्रीदेव्यार्पणमस्तु॥ ॥श्रीरस्तु॥ ॥शुभंभवतु॥

हें पुस्तक मुंबईंत. बापूहरशेट देवळेकर याणीं आपले शिळा
छापखान्यांत छापिलें. शके १७८५रुधिरोद्गारीनामसंवत्सरे.
माहे फाल्गुन कृष्ण नवम्यां भृगौ समाप्तम्. ❧ ❧
❧ ❧ ❧ ❧ ❧ ❧ ❧ ❧ ❧

